ॐ





पौराणिक तथा वैदिक अध्ययन एवं अनुसन्धान संस्थान

विज्ञानं ब्रह्म



नैमिषारण्य - सीतापुर

# नैमिषीयम्

सप्तमो वर्षः प्रथमा संख्या श्रावणीपूर्णिमा संवत् २०४३

# नैमिषीयम्

पौराणिक-वैदिकाध्ययनानुसन्धानसंस्थानस्यार्द्धवार्षिकी पत्रिका

सम्पादकः

श्रीगौरीनाथशास्त्री

सप्तमो वर्षः प्रथमा संख्या श्रावणीपूर्णिमा, संवत् २०४३
अगस्त, १९८६

सम्पादकमण्डलम्

डॉ० गौरीनाथशास्त्री, सम्पादकः

सदस्याः

१. डॉ० महाप्रभुलालगोस्वामी, २. श्रीलक्ष्मीनारायणतिवारी
३. डॉ० वैद्यनाथत्रिपाठी, ४. डॉ० जगदीशप्रसादशुक्लः
५. डॉ० हरिश्चन्द्रमणित्रिपाठी 'संयोजकः'

• • •

प्रकाशक :—
पौराणिक तथा वैदिक
अध्ययन एवं अनुसन्धान संस्थान
नैमिषारण्य, सीतापुर ( उ० प्र० )

वार्षिकं मूल्यम्—२०-०० रूप्यकाणि
प्रत्यङ्कस्य मूल्यम्—१०-०० रूप्यकाणि

प्राप्तिस्थानम्—
मोतीलाल बनारसीदास,
वाराणसी।

मुद्रकः—
विजय प्रेस,
एस. २५/६६ सरसौली ( भोजूबीर )
वाराणसी।

# विषयानुक्रमणी

# पौराणिकं कर्मकाण्डस्वरूपाध्ययनम्

डॉ० विन्ध्येश्वरीप्रसादत्रिपाठी
प्राध्यापकचरः,
वेदविभागस्य,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी

❀❀❀

येषां कर्मणां पुराणग्रन्थेषु विधेरुल्लेखः, तानि कर्माणि पौराणिकानि कथ्यन्ते। संस्कारादीनां विशेषतः श्राद्धक्रियादेः पुराणेषु स्मृतिषु चोभयत्राप्युल्लेखोऽस्तीति तेषां किंधर्मकतेति विचारे उभयधर्मकत्वमिति ब्रूमः। यतो हि संस्काराः श्रद्धाक्रिया च प्रत्येकं मानवस्याभ्यर्हिता। यद्यपि जन्मना सर्वोऽपि मानवोऽसंस्कृतत्वादनुपनीतत्वाच्च शूद्रधर्मैव भवितुमर्हति; परं बालकस्य शास्त्रेणाधिकृतः संस्कर्त्ता जनको यदि त्रैवर्णिक उपनीतश्च वर्तते, तर्हि तस्य वेदे वैदिके कर्मणि चाधिकारित्वात् तत्पुत्रत्वेन वेदाधिकारस्याक्षुण्णतया प्राप्त्यर्हत्वाद् वैदिकमन्त्रसंहितया क्रिययैव संस्काराद्यनुष्ठानम्। यदि तु पिता असंस्कृतः (अनुपनीतः) देशान्तरप्रवासादिना च पुत्रस्य कर्म कर्तुं न समर्थः, संस्कारकालश्चातिक्रामति, तदा तत्प्रतिनिधितया—

पिता पितामहो भ्राता सकुल्यो जननी तथा।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः॥

इति याज्ञवल्क्यीयादिवचनात् पितामहादीनामधिकारः प्राप्नोति। तत्र तेषां प्रातिनिध्येन संस्कारकरणे प्रधानस्य पितुः संस्कारकर्तुर्वेदानर्हत्वाद् वैदिके कर्मण्यनुपनीततयानधिकृतत्वाच्चामन्त्रकमेव संस्कारादि कार्यम्, प्रतिनिधेर्मूलपुरुषकार्यकर्तृत्वस्यैवातिदेशस्य युक्तत्वात्। अत एव च शूद्रस्य स्त्रिया वा स्वयं होमकर्तृत्वाभावेऽपि प्रतिनिधेर्ब्राह्मणस्य पौराणिकमन्त्रैरेव तत्क्रियाकरणत्वव्यवस्था सङ्गच्छते।

**संस्कारश्राद्धादिविधीनां द्वैविध्यम्—**

संस्काराः श्राद्धविधयश्च स्मार्त्ताः पौराणिकाश्चेति द्विविधाः। तत्र स्मार्त्तेषु वैदिकमन्त्रसहितविधिषूपनीतास्त्रैवर्णिका अधिक्रियन्ते। पौराणिकेषु च विधिषु अनुपनीतास्त्रैवर्णिकाः स्त्रियः शूद्राश्चाधिकियन्ते।

ये च देवप्रतिष्ठा–तुलादानव्रतादिविधयः पुराणेषूपलभ्यन्ते, तत्र च वेदमन्त्रविनियोग उपलभ्यते। तेषु कर्मसूपनीतानुपनीतोभयसाधारण्येनाधिकारित्वेऽपि

अधिकारानुरूपं वेदमन्त्रयुक्ते तद्विरहिते च कर्मकाण्डेऽधिकारः। विनियुक्तवेदमन्त्र-स्थाने च—**'नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत्'** इति याज्ञवल्क्यसंहितायाः समानन्यायकनमोन्तो नाममन्त्रः पुराणान्तरप्रोक्तः। तत्पुराणे स्थलान्तरप्रोक्तो वा तद्देवताकः पौराणो मन्त्रः प्रयोक्तव्यः।

**विनियुक्तवैदिकमन्त्रस्वरूपाध्ययनम्—**

स्मृतिषु पुराणेषु च कर्मणि विनियुक्तानां वेदमन्त्राणां प्रतीकमात्रमुक्तम्। तत्र तेषां पाठः कीदृशः कर्तव्य इति निर्णयो रुद्रकल्पद्रुमे—**'नमो हिरण्यबाहवे'** इत्यादीनामङ्गन्यासविधिषु प्रतीकमात्रेण विनियुक्तयजुर्मन्त्राणां परिसमाप्तिः कण्डिकापरिसमाप्त्या ज्ञेया। अतो भगवता गृह्यसूत्रकृता पारस्कराचार्येण तत्रोपवेशयेद्राजानं स्त्रियं वा 'प्रतिक्षत्र' इति, यज्ञानेति, विक्लृत्येनमभिमन्त्रयते सुपर्णोऽसीति प्राग्विष्णुक्रमेभ्य इति, सोष्यंतीमद्भिरभ्युक्षत्येजतुदशमास्य इति प्राग् यस्यैते, इत्यादौ मन्त्राणां प्रकरणपाठाभावात्परादिना पूर्वान्तत्वाभावेन वाक्यपरि-समाप्त्या च संदिग्धाया मन्त्रपरिसमाप्तेः कण्डिकोपरि समाप्त्येव ज्ञापितत्वात्।

यत्तु काशीदीक्षितैर्विश्वनाथभट्टैश्च प्रयोगरत्ने रुद्रपद्धतौ च 'गणानां त्वा' इति मन्त्रस्य 'वसो मम' इत्यन्तत्वमुक्तम्, तत्काण्वविषयम्, तेषां संहितायामेता-वत्या एव कण्डिकायाः समाम्नातत्वात्।

यत्तु कश्चिदाह—प्रयोगरत्ने रुद्रपद्धतौ च काशीदीक्षितादिभिर्गणानां त्वेति मन्त्रस्य वसोममेत्यन्तत्वोक्तेर्माध्यन्दिनानामपि वसो ममेत्यन्त एवायं मन्त्र इति, तदयुक्तम्, तादृशमन्त्रविनियोगकल्पनायां मानाभावात्। न हि श्रौतेऽपि तादृशमन्त्रविनियोगो दृष्टः। तत्र हि—अश्वं त्रिस्त्रिः परियन्ति पितृवन्मध्ये गणानां प्रियाणां निधीनामिति प्रक्षालितेषु महिष्यश्वमुपसंविशत्याहमजानीति। कात्यायनाचार्यैस्त्वस्य एव त्रिधा विनियोग उक्तः।

ननु च श्रौते त्रयाणां प्रत्येकं वाक्यत्वेन विनियोगादस्तु, इदं तु गणानां त्वेति मन्त्रस्य पूजायां मन्त्रकत्वश्रवणेन प्रत्येकं मन्त्रत्वायोगाद् वसो ममेति मन्त्र-शेषस्य योग्यत्वात्प्रत्येकं सम्बन्धे सत्यपि मन्त्रशेषः सर्वान्ते श्रूयत इति तावद् एकवाक्यत्वाद् वसो ममेत्यन्तस्य मन्त्रस्योक्तमिति चेत्, न, एकस्यैव वाक्यस्य मन्त्रत्व आकाङ्क्षितत्वेन मन्त्रशेषस्य प्रत्येकं सम्बन्धात्प्रत्येकं वाक्यान्तरत्वेन प्रियाणामित्यस्य मन्त्रान्तरत्वमेवापद्येत, न पुनः पूर्वमन्यशेषत्वम्। तस्मात्कण्डिका-परिसमाप्त्यैव मन्त्रपरिसमाप्तिरिति युक्तम्। शिष्टाचारोऽप्येवम्।

**पौराणिककर्मवैशिष्टयम्—**

पौराणिके कर्मणि देवतानां प्रतिमास्वावाहनपूर्वकं पूजनादि भवति। अत्र उपचाराः केचन कृताः, तेभ्यः पूजां विधायैव कर्मणः स्वरूपं सिद्ध्यति। श्रौते स्मार्ते च प्रायो हवनाङ्गत्वेनान्यासां क्रियाणामुपस्थितः। अत्र तु प्रायशः पूजा

प्रधानम्, हवनं च तदङ्गतया भवति। विष्णुयाग-रुद्रयागादौ होमप्रधानेऽपि कर्मणि पूजामन्तरा न हवनप्रवृत्तिरिति, पूजाप्रधानपदार्थः। पुरश्चरणादौ तु होमस्याङ्गत्वं स्पष्टमेव। पौराणिके कर्मणि भूयसी संज्ञया प्रसिद्धा कर्मान्ते दक्षिणा वितीर्यते। तत्र च न ब्राह्मण एव अधिकारी; अपि तु दीनान्धबधिराश्रिताः सर्वेऽपि वर्णविचारमन्तरा अधिक्रियन्ते।

**पौराणिककर्मकाण्डविधाः—**

पौराणिकानि कर्माणि बहुविधानि, यद्यपि तेषां सङ्कलनं कुत्रचिन्नोपलभ्यते, परमधस्तनदिशा पौराणकर्मणां वर्गीकरणं युक्तं भवति—

(१) संस्काराः, (२) और्द्ध्वदेहिकम्, (३) व्रतविधिः सोद्यापनम्, (४) दानम्, (५) शान्तिः, (६) उत्सर्गः, (७) पूजा, (८) यागाः, (९) पुरश्चरणम्, (१०) जपः, (११) आचारः, (१२) शुद्धिः, (१३) परिचर्या च।

एतेषु संस्कारादीनां कतिपयानां विवेचनं स्मार्तकर्मकाण्डान्तर्गतमाम्नायते, केषाञ्चन स्वरूपमत्र स्पष्टं भविष्यति।

**कालापकर्षकः—**

पुराणवचनानां प्रभावेण कर्मसु कालापकर्षो भवति। तथाहि—एकस्य कर्मणः कश्चित्कालो विहितः। तच्च कर्म पूर्वभावि। तदुत्तरं यत्कर्म, तत्केनापि हेतुना पूर्वभाविकर्मणः कालात्प्रागेव यद्यनुष्ठानं क्रियते, तदा उत्तरकर्मणोऽनुष्ठानवशाद् पूर्वभाविकर्मणोऽवश्यक्रियत्वाच्च तस्य (पूर्वभाविकर्मणः) कालमनादृत्य कालात्पूर्वं क्रियाकरणं कालापकर्षः। यथा विवाहात्पूर्वं केशान्तसंस्कारः करणीयः। केशान्तस्य च षोडशो वर्षः कालः, स च नियते काले कर्त्तव्यः। स च कालः विवाहोत्तरं वा स्यात्, विवाहपूर्वं वा। एवं स्नान-व्रतविसर्गापरपर्यायः समावर्त्तनसंस्कारोऽपि विवाहपूर्वभावि। तत्र विवाहात्पूर्वं व्रत-विसर्गः, व्रतविसर्गात्पूर्वं केशान्त इति यः क्रमः, स कालापकर्षविधयाऽपि पालनीयो भवति। विवाहनिमित्ततया केशान्तस्य पूर्वानुष्ठानप्रयोगः। तथा च संस्कारगणपतौ मनुः—

> **केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते।**
> **राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः॥**
>
> **गोदानं स्नानकं चैव समावर्त्तनकं तथा।**
> **चौलोपनयने चैव न कुर्याद्दक्षिणायने॥**

आवश्यके अपवादमाह मरीचिः—

> **गोदानासंस्कृतस्येह विवाहश्चेदुपस्थितः।**
> **याम्यायनेऽपि कुर्वीत गोदानं स्नानकं च वै॥**

चकारात्समावर्त्तनम्। षोडशवर्षो नियतकाल एव। अतो विवाहिताविवाहितयो-र्भवतीति जयरामः। व्रतविसर्गात्पूर्वं कालापकर्षं कृत्वेति प्रयोगरत्नाकरः।

एवमौर्ध्वदेहिकमासिकश्राद्धेषु द्वादशाहादिसपिण्डनपक्षे कालापकर्षं कृत्वा एकादशे द्वादशे वा दिने षोडशापि मासिकानि श्राद्धानि क्रियन्ते।

**पुराणानामावश्यकत्वप्रतिपादनम्—**

**'चोदनालक्षणोऽर्थो धर्मः[१]', 'वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः'** इत्यादि-वचनपर्यालोचनया वेदानुशिष्टा हितसाधनी क्रिया धर्म इति पर्यवस्यति। वेदश्च नित्यः स्वयम्भूशब्दराशिः। स च निर्मलान्तःकरणव्यक्तिवेद्य एव। परमोत्कृष्ट-ज्ञानसाधनत्वात् सम्प्रत्यपि हि सर्वजनसुलभेभ्यः पुस्तकेभ्योऽपि कुशाग्रधिषणा निर्मलनिरुपद्रवान्तःकरणवन्तो यथा ज्ञानमासादयन्ति, न तथा स्थूलबुद्धयः। अत एव कविशिरोमणीनामाद्येनापि उक्तम्—**'बहुस्पृशापि स्थूलेन स्थीयते बहिरश्मवत्'** इति प्रकृतिनियम एवानूदितः। अन्तःकरणस्य नैर्मल्यं च मलाभिधसूक्ष्म-दोषापनयनमूलकम्। ते च सूक्ष्मदोषाः विप्रलम्भ-लोभ-करणापाटवादिफलका वहुविधाः। दोषाणां च प्रभावेण निर्मलेऽपि वस्तुनि सदोषत्वमाभासते, पाण्डु-रोगाक्रान्तस्य शङ्खरजतादिषु पीतरूपमिव। मनुष्यश्च स्वभावत एव कर्मफलभोगार्थं शरीरधारित्वात् सदोषः।

तेषु च दोषेषु जागरूकेषु सत्सु, न वेदानां वास्तविकमभिप्रायं ज्ञातुमीष्टे साधारणो मानव इति कारुणिकैर्महर्षिभिर्विद्यानां स्थानानि सङ्कलितानि। तानि च सर्वाणि विद्यास्थानानि धर्ममेवाभिप्रयन्तीति धर्मस्यापीमान्येव ज्ञापकहेतुमूलानि स्थानानि। तेषु च चतुर्दशसु विद्यास्थानेषु वेदवाक्यानां वास्तविकं तात्पर्यमव-गमयितुं पुराणानामस्ति विशिष्टं महत्त्वम्। अत एवाभियुक्ताः स्मरन्ति—

**बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरेदिति।**
**इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्[२]** ॥ इति।

**पुराणेतिहासयोः स्मृतिवाङ्मयत्वम्—**

श्राद्धशूलपाणौ भविष्यपुराणे—

**चतुर्णामपि वर्णानां यानि प्रोक्तानि श्रेयसे।**
**धर्मशास्त्राणि राजेन्द्र शृणु तानि नृपोत्तम ॥**

**अष्टादशपुराणानि चरितं राघवस्य च।**
**रामस्य कुरुशार्दूल धर्मकामार्थसिद्धये ॥**

---

१. जै० सू० १।१।२; २. महा० भा०।

**तथोक्तं भारतं वीर पाराशर्येण धीमता।**
**वेदार्थं सकलं योज्यं धर्मशास्त्राणि च प्रभो[1] ।। इति ।**

धर्मशास्त्रं नाम स्मृतिः, '**धर्मशास्त्रं तु वै स्मृतिः[2]**' इति वचनात् ।

**पौराणिकानां विभिन्नमतानां व्यवस्थापनम्—**

धर्मशास्त्रमिति हि स्मृतिवचनानि। स्मृतयश्च बहुभिर्ऋषिभिः प्रणीताः। वक्तॄणामनेकत्वाच्च एकस्मिन्नेव विषये विभिन्नार्थानि वचनान्युपलभ्यन्ते। क्वचिदेकप्रोक्तेष्वपि स्मृतिग्रन्थेषु विभिन्नार्थानि वचनानि दृश्यन्ते। तदेतदनुसर्तॄणां कृते विचिकित्सास्पदं भवति। अपरे च स्मृतिग्रन्थेष्वेतादृशेषु श्रद्धां न दधति। तमेतं दोषजातं मीमांसासरण्या परिहर्तुं निवन्धकाराणामेतदेव वैशिष्ट्यम्, यत्ते स्पष्टतो ज्ञातान् सूक्ष्मेक्षिकया वा परिदृश्यमानान् दोषान् युक्तिप्रमाणोपस्थापनपूर्वकमुद्धरन्ति, समुपस्थापयन्ति चाऽनुष्ठेयं विषयजातं निर्दुष्टम् ।

वाक्येषु बहव ईदृशा दोषा भवन्ति, येषामुद्धारमन्तरा न वास्तविकं तथ्यं ज्ञातं भवति, आनन्त्याच्च तादृशाणां दोषाणामत्र परिगणनं कर्त्तुं न शक्यते; तथापि मीमांसकैर्विशेषतो ये दोषाः सम्भवन्ति, तेषामुद्धारः कृतः। अन्ये च साम्प्रदायिकविदुषां सत्सङ्गेन परिहरणीयाः।

**पुराणेतिहासयोः प्रामाण्यम्—**

तत्र च पुराणेतिहासयोर्विध्यंश उपाख्यानांश इति द्वयमुपलभ्यते। तत्र विध्यंशानां स्मृतावेवान्तर्भावः। उपख्यानांशास्तु अर्थवादताविधया तदुपकारकाः, प्रत्यक्षस्मृतिविरोधे न ते प्रमाणतामर्हन्ति, यथा वैदिका अर्थवादा विशदवैदिकविधिविरोधे। अत एव हेतुमन्निगदाधिकरणेऽर्थवादवशाद् दर्वीपिठरादीनामपि होमसाधनत्वं नास्तीति बोध्यत इति धर्मप्रदीपे।

मानवादिधर्मशास्त्रस्य पुराणेतिहासाद्युपाख्यानांशस्य च विरोधे धर्मशास्त्रस्यैव बलवत्त्वमादरणीयत्वञ्च। उपाख्यानांशेन हि व्यक्तिविशेषाणामाचारो वर्तमानतयावगम्यते, न तु धर्मतया। शास्त्रेण तु सर्वसाधारणी व्यवस्थाऽवगम्यत इति सर्वेषां कृते शास्त्रमेव मुख्यतया समादरणीयम्, न त्वितिहासः। एतेन शास्त्रविरुद्धेतिहासवचनानि धर्मबुध्या न ग्राह्याणि भवन्ति; किन्तु अर्थशास्त्रव्यवहारेण तेषां प्रयोजनं कल्पनीयम्। अर्थशास्त्रानुसारित्वे च तेषां '**अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः[3]**' इति याज्ञवल्क्यवचनेन धर्मशास्त्रविधिमन्यथयितुं न शक्तिरिति।

**पौराणिकार्थवादचिन्तनम्—**

तदर्थं मीमांसामतमुपस्थाप्यते—विधिगतं विशिष्टमर्थं वदन्ति स्तौतीति

---

१. वी० मि० १७ प्र०; २. मनुस्मृतिः—२।१०; ३. या० स्मृ० २।२१।

अर्थवादः। अस्य च अर्थवादरूपस्य वाक्यस्य स्वार्थप्रतिपादनपरत्वं नास्तीति सामान्यतया सर्वेऽपि प्रभवन्ति। अत एव च जैमिनिना–**'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्[1]'** इति सूत्रेणानर्थक्यमाशङ्क्य **'विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधिना स्युः[2]'** इत्यादिना विधेयार्थप्रशंसापरत्वेन विध्यैकवाक्यतया प्रामाण्यं साधितम्।

सायणाचार्येण तु भाष्यभूमिकायामर्थवादानामवान्तरतात्पर्ये स्वार्थविषयता साधिता[3], तथा हि–महातात्पर्यस्य विधेयविषयत्वेऽप्यवान्तरतात्पर्यस्य स्वार्थविषयतानिवारणात्। **'ग्रावाणः प्लवन्ते'** इत्यर्थवादस्यापि स्वार्थं प्रामाण्यं प्रसज्येतेति चेत्, न, प्रमाणान्तरबाधकत्वात्। **'द्विःसंवत्सरस्य शस्यं पच्यते'** इत्याद्यर्थवादस्य तु बाधाभावेऽप्यनुवादत्वात्, न स्वार्थे प्रामाण्यम्। वेदनफलवचनानि तु नानुवादकानि, नापि बाध्यानि। तस्मादर्थवादत्वेऽप्यस्त्येषां स्वार्थे प्रामाण्यम्, अन्यथा मन्त्रार्थवादादिभ्यो देवादीनां विग्रहादिमत्वं न सिद्ध्येदिति। स्मृतिषु चार्थवादस्य स्वार्थतात्पर्यमादायैव बहुत्र विधिः।

अत एव शास्त्रदीपिकाकारोऽपि—'स्मृतयो हि प्रायेणैतस्ततो विप्रकीर्णपरप्रकरणपठितवाक्यशेषगतसिद्धवन्निर्देशानुपपत्तिकल्पिततिरोहितप्रायविधिमूलाः[4]' इति व्याचष्टे।

**अर्थवादभेदाः—**

सोऽयमर्थवादो द्विविधः। विधिशेषः, निषेधशेषश्च। तत्र 'वायव्यं श्वेतमालभेत' इत्यादिना विधिशेषाणां **'वायुर्वै क्षेपिष्ठा देवता[5]'** इत्यादीनामर्थवादानां विधेयार्थप्रस्तावकतयाऽर्थवत्त्वम्।

**"बर्हिषि रजतं न देयम्[6]"** इत्यादिनिषेधशेषाणां **'सोऽरोदीत्'** इत्याद्यर्थवादानां तु निषेध्यनिन्दकतयाऽर्थवत्त्वम्। अतश्च लक्षणया प्राशस्त्यमप्राशस्त्यं च स्वसन्निधिपठितविधिनिषेधापेक्षितत्वादर्थवादेन वाक्येन बोध्यते। तच्च प्राशस्त्यज्ञानं शब्दभावनायामितिकर्त्तव्यतात्वेन सम्बध्यते।

एवं विधिनिषेधशेषोऽप्ययमर्थवादः स्वरूपतस्त्रिविधः—गुणवादः, अनुवादः, भूतार्थवादश्चेति।

**१–गुणवादः—**

प्रमाणान्तरविरुद्धार्थबोधकं यत्र, स गुणवादः। यथा **'आदित्यो यूपः'**। यूपो हि पशुबन्धनार्थं काष्ठम्। तस्यादित्यत्वं प्रत्यक्षप्रमाणविरुद्धम्। अतोऽयं

१. जै० सू० १।२।१; २. तत्रैव—१।२।७; ३. तै० सू० ५।
४. शा० दी० १।३।७; ५. तै० सं० २।१।१; ६. तत्रैव—१।५।१।

गुणवादः। घृतलेपनेन तेजस्वितयाऽऽदित्यत्वं गौण्या वृत्या उच्यते[१]। गौणीवृत्तिश्चेयं तत्सिद्धिः जातिः, सारूप्यम्, प्रशंसा, भूमा, लिङ्गसमवाय इत्येतैः षड्भिर्निमित्तैर्भवति।

**२—अनुवादः—**

प्रमाणान्तराधिगतार्थविषयकं वचनमनुवादः। यथा **'वायुर्वै क्षेपिष्ठा देवता'** अतिशीघ्रगामित्वं लोकसिद्धमेवात्रानूद्यते, तस्मादयमनुवादः।

**३—भूतार्थवादः—**

यत्र प्रमाणान्तरविरोधोऽपि नास्ति, लोकसिद्धार्थाऽनुवादोऽपि नास्ति, तत्र भूतार्थवादः। यथा **'इन्द्रो वृत्राय वज्रमुदयच्छत्'** इत्यादि। परकृतिपुराकल्पावपि भूतार्थवादे निविशेते। एकव्यक्तिकृतस्य कर्मणः कथनं परकृतिः। **'अग्निर्वा अकामयत'** इत्यादि। परप्रवक्तृकार्यादिप्रतिपादकः पुराकल्पः। यथा **'पुरा ब्राह्मणा अभैषुः'** इति।

**विधान्तरम्—**

विधेयां क्रियां स्तुवन्तोऽर्थवादाः फलविधिसदृशा विधिवन्निगदा इत्युच्यन्ते[३]। हेतुविधिसदृशाश्च हेतुवन्निगदा इत्युच्यते[४]।

**अर्थवादानां फलवत्वम्—**

यत्र विधौ फलं न श्रूयते, तत्रार्थवादिकं फलं कल्प्यते। यथा रात्रिसत्रन्याये साधितम्[५]।

एवं सन्दिग्धार्थनिर्णयेऽपि अर्थवादानामुपयोगः। **'अक्ताः शर्करा उपदधाति'** इत्यत्र तेजो वै घृतमित्यर्थवादाद् घृतमित्यञ्जनसाधनं निश्चीयते[६]।

**पुराणधर्मशास्त्रीयोदाहरणानि—**

१—धर्मशास्त्रग्रन्थेषु विधिशेषोऽर्थवादः—

**सन्ध्यामुपासते ये तु सततं संशितव्रताः।**
**विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम्**[७]॥ इति।

२—निषेधशेषार्थवादा अपि—

**तैलस्त्रीमांससंभोगी पर्वस्वेतेषु वै पुमान्।**
**विण्मूत्रभोजनं नाम प्रयाति नरकं नृप**[८]॥ इति।

---

१. जै० न्या० १।४।१३-१८; २. तै० सं० १।५।७।५; ३. जै० न्या० १।२।२।
४. तत्रैव—१।२।३; ५. तत्रैव—४।३।८; ६. तत्रैव—१।४।१९।
७. दे० भा० ८; ८. तत्रैव—९।

३—निर्णयसिन्धौ **'पाण्यास्यो हि द्विजः स्मृतः[१]'** इत्यस्य हेत्वर्थवादं हेमाद्रिसम्मतमाह कमलाकरः।

४—माघमासं प्रकृत्य **'अस्मिन्योगे त्वशक्तेऽपि स्नायादपि दिनत्रयम्'** इति विधौ यत्किञ्चिद्दिनत्रयमिति भाट्टमतं **'महामाघीं पुरस्कृत्य सस्नौ तत्र दिनत्रयम्'** इति पद्योक्त्या **'सन्दिग्धेषु वाक्यशेषादिति'[२]** न्यायाद् निरस्य त्रयोदश्याद्येवेति निश्चिक्ये कमलाकरः[३]। एवमन्यत्रापि वाक्यशेषेण बहुत्र निर्णयः[४]।

५—स्मृतिचन्द्रिकायाम्—'तत्रात्मा जायते स्वयम्' इत्यस्य हेतुत्वं निरस्यार्थवादत्वं स्थापितम्।

एवमयमर्थवादांशोऽपि पौराणिकीमीमांसासरण्या निकषभूतया परिघृष्टः स्वस्यासन्दिग्धं प्रकटीकृत्य धार्मिकाणां मनोबलं द्रढयिष्यतीति विद्वद्भिः प्रयतनीयम्।

**पौराणिकविधाववान्तरकर्मफलम्—**

यदि काम्यं कर्म, तत्र फलस्यैव कर्मणि प्रयोजकत्वं सर्वविदितम्। कतिचन कर्माणि ईदृशान्यपि सन्ति, येषामन्यकर्मान्तःपातित्वमस्ति। परं तदन्तर्गतस्य कस्यचनांशस्य तत्र पृथगपि फलं श्रूयते चेत्, तदा तस्य व्यापककर्मणः सकाशात् पृथगपि प्रयोगः। यथा—नवरात्रव्रतं प्रतिपदादिनवम्यन्तमेकं कर्म। एतस्य व्रतस्यान्तः 'अष्टमी-नवमी' इत्यनयोरपि गणनं वर्तते। परमनयोर्व्रतोपवासयोः फलमपि तत्रैव श्रूयते। ततश्च अष्टमीव्रतं नवमीव्रतं चेति द्वयमवेष्टिन्यायेन पृथगप्यनुष्ठीयते। तथा च निर्णयसिन्धौ तत्त्वं तु राजसूयेऽन्ययागैः समप्रधानायाः सहिताया अप्यवेष्टेः 'एतयान्नाद्यकामं याजयेत्' इत्येकत्वान्मध्ये विधानाच्च यथा फलार्थो वहिः प्रयोगः, तथा नवरात्रमध्यस्थाया अष्टम्या नवम्या वा फलार्थः पृथक्प्रयोग इति। मीमांसायामवेष्टिन्यायेन महाप्रयोगात्सफलानामवान्तरकर्मणां पृथक् प्रयोगो निर्णीयते। स चावेष्टिन्यायोऽधस्तादुच्यते।

**अवेष्टिन्यायः—**

राजसूयप्रकरणे काचिदिष्टिरवेष्टिनामिका श्रूयते–'आग्नेयमष्टाकपालं निर्वपेत्, हिरण्यं दक्षिणा। ऐन्द्रमेकादशकपालम्, ऋषभो, दक्षिणा वैश्वदेवं चरुम्, पिशङ्गी मष्ठोही दक्षिणा। मैत्रावरुणीमामिक्षाम्, वशा दक्षिणा। बार्हस्पत्यं चरुम्, शितिपृष्ठो दक्षिणा' इति। तस्यामेवेष्टौ हविषां क्रमव्यत्ययः श्रूयते—'यदि ब्राह्मणो यजेत्, बार्हस्पत्यं मध्ये निधायाऽऽहुतिं हुत्वा तमभिधारयेत्। यदि राजन्य ऐन्द्रम्। यदि वैश्यो वैश्वदेवम्' इति। तत्र यथा पूर्वाधिकरणे ऐन्द्रवायवाग्रत्वं व्यवस्थापयितुं यदि शब्दयुक्तेन वाक्येन रथन्तरं निमित्तत्वेनानूदितम्, एवमत्रापि पञ्चमस्थाने

---

१. निर्णयसिन्धुः—३१४; २. जै० न्या० १।४।१६; ३. नि० सि० १६०। ४. या० स्मृति।—१।५।६।

श्रूयमाणं बार्हस्पत्यं चरुं मध्ये तृतीयस्थाने स्थापयितुं 'यदि ब्राह्मणः' इत्यादि निमित्तत्वेनानूद्यते, द्वितीयस्थाने श्रुतस्यैन्द्रस्य तृतीयस्थानेऽवस्थापयितुं 'यदि राजन्यः' इत्यनुवादः। वैश्वदेवस्य तु स्वत एव तृतीयस्थाने श्रवणात् तत्र मध्ये निधानविधिर्नित्यानुवादः।

ननु राजकर्तृके राजसूये ब्राह्मणवैश्ययोः प्राप्त्यभावान्नानुवादो युक्त इति चेत्, न, तयोरपि राज्ययोगहेतुराजशब्दार्थत्वादिति प्राप्ते सिद्धान्तः राजशब्दः क्षत्रियजातौ रूढः, न तु राज्ययोगस्तस्य प्रवृत्तिनिमित्तम्। प्रत्युत राजशब्दस्य राजयोगः प्रवृत्तिनिमित्तम्। 'राज्ञः कर्म' इति विगृह्य राजप्रातिपदिकस्योपरि प्रत्ययविशेषविधानात्। ब्राह्मणवैश्ययोः प्रजापालनेन राज्यशब्द उपचरितः। तस्माद् अवेष्टौ ब्राह्मणवैश्ययोः पूर्वमप्राप्तावनेन वचनेन प्राप्येते।

ननु राजसूयस्य राजकर्तृकत्वात्तदन्तर्गताया अवेष्टेरपि तथात्वात्तस्यां ब्राह्मणवैश्ययोः प्रापणमयुक्तमिति चेत्, मैवम्, अन्तरवेष्टौ तदसम्भवेऽपि राजसूया-द्बहिः प्रयुज्यमानायामवेष्टौ सत्सम्भवात्। तस्मादत्र ब्राह्मणादिकर्तृकं यथोक्तगुण-विशिष्टं कर्मान्तरं विधीयत इति।

ततश्च पुराणेषु कस्यचन विशेषकर्मणो मध्ये तदङ्गत्वेन विधीयमानस्या-वान्तरकर्मणः फलं यदि श्रूयते, तर्हि, तस्य पृथगपि क्रियते, कर्तुं शक्यते च।

एवमिह कर्मकाण्डविद्यानिरूपणप्रसङ्गे पौराणिककर्मकाण्डविद्याचिन्तनं समाप्यत इति शम्।

# मनूक्तन्तु महौषधम्

श्रीयुत आदित्यनाथदेवशर्मा
प्राध्यापकः,
संस्कृतविभागस्य,
वर्धमानविश्वविद्यालये

❀ ❀ ❀

यावल्लसन्ति चन्द्रार्कगङ्गापर्वतसिन्धवः ।
भारते परितस्तावन्मनोर्वार्त्ता विघोष्यते ॥ १ ।

त्रितापसन्तप्तजगद्धितैषिण
सर्वज्ञधर्माश्रयसत्यमूर्त्तये ।
महात्मने नित्यममेयतेजसे
नमोऽस्तु तस्मै मनवे महर्षये ॥ २ ।

धर्मस्य परमं मूलं वेदः । धर्मतत्त्वं बुभुत्सूनां श्रुतिरेव प्रमाणम्; किन्त्वस्य निगूढं तत्त्वं न शक्यमहो वेदतः सुखेनावगन्तुम् । पुराणस्मृत्यादितस्तु तदनायासमलं विज्ञातुम् । वस्तुतः स्मृतिशास्त्रादृते सनातनधर्मस्य वेदनिहितस्य सूक्ष्मं रहस्यं प्रच्छन्नमेव स्यात् । अतः संहितापूर्णचन्द्रेण श्रुतिज्योत्स्ना प्रकाशितेत्युक्तिर्नो नात्युक्तिकोटिमात्र इति । सम्प्रति बहूनां वेदशाखानामदर्शनाद् यत्तत्त्वं पुनः प्रत्यक्षवेदेषु नोपलब्धम्, तत् खलु स्मृतिषु स्पष्टत एवोद्घोषितम् । स्मर्यंते च—
**'यन्न दृष्टं हि वेदेषु तद्दृष्टं स्मृतिषु द्विजः ।'**

मानवीयधर्मशास्त्रे स्मृतेर्माहात्म्यमेवमुट्टङ्कितम्—

श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः ।
इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम्[1] ॥
योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद्द्विजः ।
स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः[2] ॥
वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च[3] ॥

अतो न कथमपि समीचीनः स्मृतेरवमान इति प्रेक्षावतां परामर्शः ।

दृश्यन्ते हि शास्त्रेषु मन्वादयो विंशतिधर्मशास्त्रप्रवर्त्तकाः । तैश्च मनीषिभिः सम्प्रणीता मनुसंहितादयः स्मृतयो विंशतिसंख्याकाः प्रसिद्धाः ।

---

१. मनुसंहिता—२।९; २. तत्रैव—२।५५; ३. तत्रैव—२।६ ।

अस्ति तावदास्तिकानां परम्परागतप्रवादो यत् सर्वेषु धर्मशास्त्रेषु मनुसंहिताया अधिकतरं प्रामाण्यम्। किमयं प्रवादः **'इति होचुर्वृद्धा इह वटे यक्षः प्रतिवसति'** इतिवद् ऐतिह्यमात्रमुतास्ति मूले किमपि प्रमाणम्, येनेयं प्रसिद्धिः प्रामाणिकानां बुद्धिमधिरोहेत्? विचिकित्सामिमां चिकित्सितुमित्त्थं विचिन्त्यते—'मन्वादीनां सर्वेषामेव ऋषीणां वेदवित्त्वं समानमेवेति वितर्क्यमाणेऽपि सर्वेभ्यो धर्मशास्त्रेभ्यो मनुसंहिताया धर्मविषये प्रामाण्यमधिकतरमभ्युपेयम्। यतो हि संहितायामत्र वर्णभेदेनाश्रमभेदेन च वेदोक्ताः सर्वे एव धर्माः सामान्येन विशेषतश्चोपदिष्टाः। साधूक्तं मानवधर्मशास्त्रे—

**यः कश्चित् कस्यचिद्धर्मो मनुना परिकीर्त्तितः।**
**स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः[१]॥**

मनुस्मृतौ वेदार्थस्य रहस्यं माहात्म्यं च प्रकटीकृतम्। स्मृतिरियं वेदस्य परिपूरिकापि। प्रत्यक्षवेदेष्वश्रुतमपि यदुपदिष्टं मनुना सर्वज्ञेन सर्वशक्तिमता, तत् परमकल्याणास्पदम् इत्यतस्तत् समवलम्बनीयमस्माभिः श्रेयस्कामैः। **'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्'[२]** इति जैमिन्युक्तेः श्रुत्यनुसारितया मनुस्मृतेः प्राधान्यं सुमहदेव दर्शितमाचार्यशङ्करेण शारीरिकभाष्ये[३]। एवं मनोर्धर्मशास्त्रस्य वेदार्थस्मारकत्वं वेदार्थपूरकत्वञ्च सूपपन्नमिति निश्चप्रचमलमभिधातुम्। तथा चाम्नातम्—

**या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः।**
**सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः[४]॥**

मन्वतिरिक्तासु स्मृतिषु वेदोक्ता धर्माः कृत्स्नतो नोपदिष्टाः। मनुसंहितायान्त्वेवम्भूतापूर्णताकणिकापि कुत्रापि नोपलभ्यते। अतः श्रुत्यनुकूलमस्याः सर्वातिशायि प्रामाण्यं केन खलु निवार्येत? तदुक्तं बृहस्पतिना—

**वेदार्थपनिबन्धृत्वात् प्राधान्यं हि मनोः स्मृतम्।**
**मन्वर्थविपरीता या सा स्मृतिर्न प्रशस्यते[५]॥**

वैदिकयुगे द्विजातिरिक्तानां साधारणजनानां वेदोक्तयज्ञधर्मादिसम्पादनमसम्भवमासीत्। मनुस्मृतिरेवादौ सनातनीयानां दुरधिगमं धर्मं ज्ञानञ्च सर्वजनप्रयोगार्हं कृत्वा महोपकारमसाधयत्। साधारणैश्च वेदोक्तं तत्त्वं सुखेन समधिगतं स्मृतिद्वारेण। अहो कियती अतिमहती विभूतिरेवास्याः संहितायाः!

किञ्च भारतीयादर्शः खलुः मनोः स्मृतिकुञ्चिकया प्रकृष्टतयैव समुद्घाटितः। अत्र सनातनार्यधर्मस्य पराकाष्ठा प्रकटिता। धर्मार्थकाममोक्षाणां

---

१. मनुस्मृतिः—२।७; २. जैमिनिसूत्रम्—१।३।३।
३. ब्रह्मसूत्रम्—२।२।१-शाङ्करभाष्यं द्रष्टव्यम्; ४. मनुसंहिता—१२।९५।
५. तत्रैव—२।२-मन्वर्थमुक्तावली-धृतश्लोकः।

चतुर्वर्गाणाम्, ब्राह्मणक्षत्रियवैश्यशूद्राणां चतुर्वर्णानाम्, गार्हस्थ्यब्रह्मचर्यबाणप्रस्थ-सन्न्यासानां च चतुराश्रमाणां सम्यङ्निरूपणं क्रियत एवात्र यथार्थम् ।

किञ्च सृष्टितत्त्वं धर्मतत्त्वं मोक्षतत्त्वं राष्ट्रानुशासनं समाजविधानं राजधर्म-पुरुषधर्म-योषिद्धर्मादिकं च सर्वमेवात्र सूपदिष्टं वर्त्तते । अपि च अशौचनिर्णयः, वस्तुनः शुद्ध्यादिविनिश्चयः, भक्ष्याभक्ष्यादिविवेकश्च सुष्ठ्वेवात्र वर्णिताः । लोकस्थितये हि यानि प्रयोजनानि, तानि सर्वाण्यत्र सन्निबद्धानि । अनुपममेवात्र सूक्तिरत्नं जनहितकरं समुल्लसति[1] । मोक्षोपयोगितया ब्रह्माद्वैत-वादश्च सुप्रतिपादित एवान्तिमाध्याये—

**एनमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम् ।**
**इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम्[2] ॥**

**सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।**
**समं पश्यन्नात्मयाजो स्वाराज्यमधिगच्छति[3] ॥**
**सर्वमात्मनि सम्पश्येत् सच्चासच्च समाहितः ।**
**सर्वं ह्यात्मनि सम्पश्यन् नाधर्मं कुरुते मनः[4] ॥**
**आत्मव देवताः सर्वाः सर्वमात्मन्यवस्थितम् ।**
**आत्मा हि जनयत्येषां कर्मयोगं शरीरिणाम्[5] ॥**

**'सत्यं वद, धर्मं चर, स्वाध्यायान्मा प्रमदः[6]'** इत्युपनिषत्सु सत्यधर्मादि-सहितस्य स्वाध्यायस्य यन्माहात्म्यमुपदिष्टम्, यच्च शिक्षाध्यायस्य नवमानुवाके समनुक्रान्तम्—**'ऋतञ्च स्वाध्यायप्रवचने च[7]'** । यच्च विष्णुपुराणे प्रोक्तम्—

**स्वाध्यायाद् योगमासीत योगात् स्वाध्यायमावसेत् ।**
**स्वाध्याययोगसम्पत्त्या परमात्मा प्रकाशते ॥** इति ।

तादृशस्वाध्यायस्यानुत्तमो ग्रन्थो मनुसंहितैव । तदुक्तम्—

**तस्य कर्मविवेकार्थं शेषाणामनुपूर्वशः ।**
**स्वायम्भुवो मनुर्धीमानिदं शास्त्रमकल्पयत्[8] ॥**

सर्वेषु धर्मवित्सु मनोरेवाभ्यर्हितत्त्वात् प्रथमतो नामोल्लेखः परिलक्ष्यत एव सर्वत्र । तदुक्तम्—**'मन्वत्रिविष्णुहारीतयाज्ञवल्क्यौशनोऽङ्गिराः[9]'** इत्यादि । दृष्टं

---

१. मनुसंहिता—७।२०६; ७ ३२।७।८; ७।२२; २।२२५;२।६४।७।६४; ७।१०५ इत्यादयः श्लोकाः अत्र सन्द्रष्टव्याः ।

२. तत्रैव—२२।२२३, अत्र एनमेके इत्यत्र एतमेके इति पाठान्तरम् ।

३. तत्रैव—१२।९१; ४. तत्रैव—१२।११८ ।

५. तत्रैव—१२।११९; ६. तैत्तिरीयोपनिषदि—१।१३।२; ५ तै.—१।९।२ ।

७. विष्णुपुराणम्—६।६२; ८. मनुसंहिता—१।१०२ ।

९. बृहद्धर्मपुराणम्, पूर्वखण्डम्—२९।२४, २५ ।

च पञ्चतन्त्रकथामुखे—'**धर्मशास्त्राणि मन्वादीनि, अर्थशास्त्राणि चाणक्यादीनि, कामशास्त्राणि वात्स्यायनादीनि**[1]'। एतेनापि मनोः प्राधान्यमधिकतरमामन्यते। पुनर्यद्वस्तु प्रधानं तदेवाधिकृत्य टीकाकृद्भिः भाष्यादयः क्रियन्त इति प्रसिद्धम्। मेधातिथि-गोविन्दराज-कुल्लूकभट्ट-नन्दन-राघवानन्दाश्च प्रेक्षावन्तो मनुस्मृतेरनुपमा एव भाष्यटीकादि विरचय्य चिरन्तनं यशोलब्धवन्तः। रामचन्द्र-विश्वरूप-सर्वज्ञ-नारायण-धरणीधर-माधवाचार्य-श्रीधरस्वामि-रुचिदत्त-भोजदेव-भारुचिप्रमुखाश्च बहवः कृतिनो मनुसंहितायाष्टीकाप्रणेतारो दृश्यन्ते। मनुस्मृतिं विना न कामपि स्मृतिमवलम्ब्य दृश्यते इदृशी भूयसी प्रचेष्टा। एतदपि प्रकटयेद्धि मनुस्मृतेरनन्य-साधारणं गरीयस्त्वम्।

मनुसंहिताया महान् प्रभावो जीवने वरीवर्त्ति। समाजस्य भित्तिभूमिरियं सर्वविषये समाजमनुशास्ति। सर्वेषां मनुजानां वर्णाश्रमभेदेन किं हेयं किं वोपा-देयं तच्चेयं निर्दिशति सुष्ठुतया। इयं हि इह परत्र च प्राणभृतां सुखस्य परमं निदानम्, दुर्गमे तमःसङ्कुले गमनपथे चालोकवर्त्तिका। अस्माकं संस्कारा अस्या विधानेन सम्यङ् नियन्त्रिताः, देदीप्यमानाश्चावतिष्ठन्ते। किं बहुना, सम्प्रति घोरेऽस्मिन् कलियुगे कलुषकवलितचित्ताः प्रायः सर्वे मनुजाः दुःखसमुद्रे निपति-तास्तं तर्त्तुकामा इतस्ततः पर्यटन्ति। अस्मिन् विपत्सागरे मज्जतां देहभाजा-मियमेकैव संहिता निस्तारनौका। मानवजातेः कल्याणार्थं भगवान् मनुः प्रणिनाय संहितामिमाम्। मनुवचनमस्माकं व्यावहारिके पारमार्थिके च जीवने नितरामुप-कुर्वत् सुमहौषधं भवति। तदुक्तं मानवस्मृतौ—

**अस्मिन् धर्मोऽखिलेनोक्तो गुणदोषौ च कर्मणाम्।**
**चतुर्णामपि कर्माणामाचारश्चैव शाश्वतः**[2] ॥
**वृत्तीनां लक्षणं चैव स्नातकस्य व्रतानि च।**
**भक्ष्याभक्ष्यञ्च शौचञ्च द्रव्याणां शुद्धिमेव च**[3] ॥
**स्त्रीधर्मयोगं तापस्यं मोक्षं सन्न्यासमेव च।**
**राज्ञश्च धर्ममखिलं कार्याणाञ्च विनिर्णयम्**[4] ॥
**संसारगमनञ्चैव त्रिविधं कर्मसम्भवम्।**
**निःश्रेयसं कर्मणाञ्च गुणदोषपरीक्षणम्**[5] ॥

यत्र किल मनुप्रणीतेयं संहिता समनुसृता, तत्र स्वर्गतुल्ये राज्ये दुःख-वह्निकणिकापि नोपलभ्येत। रोगः शोकः पापं दारिद्र्यमकालमृत्युश्च तत्स्थाना विलयं यान्ति।

---

१. पञ्चतन्त्रकथामुखम्, पृ० २, मोतीलालवाराणसीसंस्करणम्—१९६९।
२. मनुसंहिता—१।१०७; ३. तत्रैव—१।१२३।
४. तत्रैव—१।१२४; ५. तत्रैव—१।१२७।

'देशानुशिष्टं कुलधर्म्ममग्र्यम्' इत्युक्तेः धर्म एव परमशान्तिकारकः शास्त्रेषूपदिश्यते[1]। धर्महीनानां त्वत्यन्तं परिवादः समाजे सर्वत्र जोघोष्यते। सत्यपि सत्कुलजातत्वे वैदुष्ये धनयौवनादौ शीलवैमल्यमन्तरेण सर्वमकिञ्चित्करं स्यात्। तदुक्तम्—**'धर्मेण हीनाः पशुभिः समानाः[2]'**। विगीताविगीतकर्मणा लोके अयशो यशो वा समासाद्यते। सदाचारपरायणाः सन्तः समाजे सर्वत्र समाद्रियन्ते, तदन्ये तु वेदवेदाङ्गवेदान्तादिपारदृश्वानोऽपि विनिन्द्यन्त एव। तदुक्तम्—**'आचारहीनं न पुनन्ति वेदाः[3]', 'शास्त्राण्यधीत्यापि भवन्ति मूर्खाः। यस्तु क्रियावान् पुरुषः स विद्वान्[4]'**। ये खलु वैनयिकेन स्वाभाविकेन च सद्वृत्तेनोपेताः, ते जगति सतामादर्शभूता धार्मिका इति प्रथन्ते। येषां पुनर्वैनयिकवृत्तेनोपसन्नानामप्यसत्स्वभावो दुरतिक्रमः, दुर्भोगतरास्ते धर्मापेताः परामेव कोटिमधिरोहन्ति शोच्यतायाः। तस्माच्छिष्टानुमोदितत्वाद् इष्टसाधनत्वाद् धर्मप्रयोजकत्वाच्च शिष्टाचाराः सर्वैः पालनीयाः। उक्तञ्च श्रीमद्भगवद्गीतायाम्—

**यद् यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।**
**स यत् प्रमाणं कुरुते लोकस्तदनुवर्त्तते[5]॥**

भणितञ्च—**'आचारलक्षणो धर्मः सन्तश्चाचारलक्षणाः[6]'**।

सर्वमेतदभिप्रेत्य सुष्ठु निगदितं मनुना—

**तस्मिन् देशे य आचारः पारम्पर्यक्रमागतः।**
**वर्णानां सान्तरालानां स सदाचार उच्यते[7]॥**

शिष्टाचारस्य श्रुत्यादिमूलकत्वं स्मृतिः प्रत्यक्षमैतिह्यमनुमानश्चतुष्टयम्[8] इति तैत्तिरीयारण्यकभाष्ये सुप्रतिपादितं सायणेन—'अनुमानः शिष्टाचारः। तेन हि मूलभूतं श्रुतिस्मृतिलक्षणं प्रमाणमनुमीयते[9]' इति। यथाभिमतसदाचारस्य धर्मतत्त्वस्य निरूपकमत्युत्तममिदं मानवं शास्त्रं महाजनसभाजितसमाजे सहृदयैः समादृतम्, श्रेयस्कामैः समादरणीयश्च। तथा हि सदाचारं सम्प्रदायाविच्छेदलक्षणमभ्युदयभाजनं जीवनस्य मुख्यमुद्देश्यं निर्द्दिशन्नेवाह धर्मपाता महर्षिः—

**एवमाचारतो दृष्ट्वा धर्मस्य मुनयो गतिम्।**
**सर्वस्य तपसो मूलमाचारं जगृहुः परम्[10]॥**

---

१. 'चोदनालक्षणोऽर्थो धर्मः' (जैमिनिसूत्रम्–१।१।२), 'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः' (वैशेषिकसूत्रम्–१।१।२)।
२. सुभाषितरत्नखण्डमञ्जूषा—पृ० २२।
३. ब्रह्मसूत्र-शाङ्करभाष्यधृतस्मृतिवाक्यम्—३।२।१०।
४. सुभाषितरत्नभाण्डागारम्, पृ० ४०, श्लोक २१।
५. श्रीमद्भगवद्गीता—३।२१;
६. महाभारतम्—१३।१०७।९।
७. मनुसंहिता—२।१८;
८. तैत्तिरीयारण्यकम्—१।२।१।
९. तैत्तिरीयारण्यकभाष्यम्—१।२।१;
१०. मनुसंहिता—१।१०।

आचाराद् विच्युतो विप्रो न वेदमलमश्नुते।
आचारेण तु संयुक्तो सम्पूर्णफलभाग् भवेत्[1]॥

आचारः परमो धर्मः श्रुत्युक्तः स्मार्त एव च।
तस्मादस्मिन् सदायुक्तो नित्यं स्यादात्मवान् द्विजः[2]॥
देशधर्मान् जातिधर्मान् कुलधर्मांश्च शाश्वतान्।
पाषण्डगणधर्मांश्च शास्त्रेऽस्मिन्नुक्तवान् मनुः[3]॥

अत एव एवमुक्तं मनोर्माहात्म्यं वशिष्ठधर्मसूत्रे—'देशधर्मजातिधर्मकुलधर्मान् श्रुत्यभावादब्रवीन्मनुः[4]'। मनुसंहिताध्ययनस्याभीष्टं फलं स्वयमुक्तं मनुना—

इत्येतन्मानवं शास्त्रं भृगुप्रोक्तं पठन् द्विजः।
भवत्याचारवान् नित्यं यथेष्टां प्राप्नुयाद् गतिम्[5]॥

एवं मनुस्मृतेश्चिरन्तनं माहात्म्यं गौरवञ्च नास्तिकैर्वराकैरपि वेदितव्यम्, किमुतास्तिकसम्प्रदायानाम्। कुमारिलभट्टाः, शङ्कराचार्याश्च मनोर्माहात्म्यं प्राधान्यं च स्वग्रन्थेषु स्वीचक्रुः। मनोरेवं महती कीर्त्तिर्बहुत्र बहुभिरुद्गीयते। तदुक्तं महाभारते—

पुराणं मानवो धर्मः स्वाङ्गो वेदश्चिकित्सितम्।
आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः[6]॥

उक्तं चान्यत्र—

तावच्छास्त्राणि शोभन्ते तर्कव्याकरणानि च।
धर्मार्थमोक्षोपदेष्टा मनुर्यावन्न दृश्यते[7]॥

कविकुलगुरुणा कालिदासेनाप्युक्तं रघुवंशे—

रेखामात्रमपि क्षुण्णादामनोर्वर्त्मनः परम्।
न व्यतीयुः प्रजास्तस्य नियन्तुर्नेमिवृत्तयः[8]॥

भाषितञ्च भासेन प्रतिमानाटके—'साङ्गोपाङ्गं वेदमधीये मानवीयं धर्मशास्त्रं माहेश्वरं योगशास्त्रं बार्हस्पत्यमर्थशास्त्रं मेधातिथेर्न्यायशास्त्रं प्राचेतसं श्राद्धकल्पञ्च[9]'।

---

१. मनुसंहिता—१।१०९; २. तत्रैव—१।१०४।
३. तत्रैव—१।११४; ४. वशिष्ठधर्मसूत्रम्।
५. मनुसंहिता—१२।१-६।
६. तत्रैव—१।१—मन्वर्थमुक्तावलीधृतं भारतवाक्यम्। 'भारतं मानवो धर्मो वेदाः साङ्गाश्चिकित्सितमिति पाठान्तरम्। आश्वमेधिकपर्वपरिशिष्टम्—४।३९३।
७. मनुस्मृतिः—१+१—कुल्लूकधृतं बार्हस्पत्यवचनम्।
८. रघुवंशम्—१।१७; ९. प्रतिमानाटकम्, पञ्चमाङ्कः।

महर्षिरपि ब्रवीति मानवे धर्मशास्त्रे—

इदं शास्त्रमधीयानो ब्राह्मणः संशितव्रतः ।
मनोवाग्देहजैर्नित्यं कर्मदोषैर्न लिप्यते[1] ॥

इदं स्वस्त्ययनं श्रेष्ठमिदं बुद्धिविवर्धनम् ।
इदं यशस्यमायुष्यमिदं निःश्रेयसं परम्[2] ॥

तस्मादिमा संहिता विहाय देशस्याध्यात्मिकी आधिभौतिकी वा समुन्नतिर्न सुखेन वर्षशतेनापि शक्यं कल्पयितुम् । एवंविधगुणशालितया अन्तर्भारते ततो बहिश्च मनुस्मृतः शतकोटिजनप्राणोच्छ्वासोऽजनि, जायते, जनिष्यते च । यावत् चन्द्रार्कौ तिष्ठतः, तावद् आ समुद्रहिमाचलं स्मृतिरियं सातिशयहितकारिणी समेषामेव सचेतसां चेतःसु सर्वदा विराजमाना, स्मृतिषु प्रकृष्टं स्थानञ्चासेदुषी सर्वोपरि वरीवृत्यते । तथा च श्रूयते—

(क) 'यत् किञ्चिन्मनुरवदत्तद्वै भेषजम्[3] ।'

(ख) 'यद्वै किञ्च मनुरवदत्तद्भेषजम्[4] ।'

(ग) 'मनुर्वै यत्किञ्चिदवदत्तद्भेषजं भेषजतायै[5]' इति ।

अत एवमन्ते ब्रूमः—

वर्णाश्रमेभ्यः कृतवृत्तिभागः
जातैः कुलार्दैर्नियमं विधास्यन् ।
स्वानुग्रहाद्दर्शितधर्ममार्गः
स्वायम्भुवो वै महतो महीयान् ॥

अतिगम्भीरवेदाब्धेरर्थोपस्कारकं तथा ।
वचोरत्नं मनोर्लुप्तश्रुत्यर्थपरिपूरकम् ॥

धर्मार्थकाममोक्षाणां चतुर्णां साधनं महत् ।
मनोर्वाक्यं सदा सत्यं मनूक्तन्तु महौषधम् ॥ इति ।



१. मनुसंहिता—१।१०४; २. तत्रैव—१।१०६ ।
३. ताण्ड्यमहाब्राह्मणम्—२६।१६।७; ४. तैत्तिरीयसंहिता—२।२।१०२ ।
५. मनुस्मृतिः—१।१-कुल्लूकोल्लिखितं छान्दोग्यब्राह्मणवचनम् ।

# यजुर्वेदे महिलर्षीणां छन्दोयोगदानम्

डॉ० रामकिशोरमिश्रः

संस्कृत-विभागाध्यक्ष;

महामनामालवीयमहाविद्यालयस्य

खेकड़ा, मेरठ ( उ० प्र० )

❀ ❀ ❀

यजुर्वेदे गद्यं पद्यं च द्वयमपि प्राप्यते। अतः कथ्यते—'गद्यपद्यात्मको यजुः', किन्तु तत्र गद्यस्य प्रधानता वर्तते। गद्यच्छन्दस्सु वर्णानामवसानं नियतं न भवति। अतः कथ्यते—'अनियताक्षरावसानो यजुः' इति। अस्मात् केचन विद्वांसो यजुर्वेदे छन्दांसि न मन्यन्ते; किन्तु छन्दोविना न कस्यचन शब्दस्य प्रयोगो भवति। अतो यजुर्वेदे गद्यपद्यमयानि छन्दांसि सन्ति। तत्राप्येकाक्षरपादादारभ्य षड्विंशत्यक्षर-पादपर्यन्तं चतुरुत्तरशतवर्णयुक्तानि छन्दांसि राराज्यन्ते।

यजुर्वेदीयमन्त्रेषु छन्दोनामान्यपि प्राप्यन्ते, यथा—'माच्छन्दः प्रमाच्छन्दः प्रतिमाच्छन्दोऽअस्त्रीवयश्छन्दः पङ्क्तिश्छन्दऽउष्णिक्छन्दो बृहतीच्छन्दोऽनुष्टु-बछन्दो विराट्छन्दो गायत्रीच्छन्दस्त्रिष्टुप्छन्दो जगतीच्छन्दः' इति[1]। तत्र गायत्र्यादिसप्तच्छन्दोभ्यः पूर्वं 'दैवी यजुः, प्राजापत्या, आसुरी, साम, ऋक्, आर्षी, ब्राह्मी' इत्यादिपदसंलग्नाश्छन्दोभेदाः प्राप्यन्ते। एषु छन्दस्स्वपि ते सर्वेऽपि नियमाः सन्ति, ये ऋग्वेदीयच्छन्दस्सु प्रचलिता वर्तन्ते, येषु न्यूनाधिकाक्षरत्वात्तेषां निचृ-द्भुरिग्विराट्स्वराडादयोऽवान्तरभेदा भवन्ति। अत्रापि त्रिपादल्पीयपिपीलक-यवमध्यादिभेदाः सन्ति।

केषाञ्चिदाचार्याणां मतमिदं यद् यजुर्मन्त्रेषु छन्दांसि न सन्ति। यथा—आचार्यकात्यायनेन यजुःसर्वानुक्रमसूत्रे 'यजुषामनियताक्षरत्वादेकेषां छन्दो न विद्यते' इति मतं प्रकटितम्। तेषामाचार्याणां मतानुसारेण यजुर्मन्त्रेषु ह्यक्षराणां

---

१. यजुर्वेदे–१४।१८।

कोऽपि नियमो नास्ति। छन्दांसि तु नियताक्षराणि भवन्ति। अतस्तेषु गायत्र्यादि-नियताक्षरसंख्यास्वरूपच्छन्दसामभावः। ये चाऽऽचार्या यजुर्मन्त्रेषु छन्दोविधानं मन्यन्ते, तेषां मतं यद् यानि गायत्र्यादीनि सप्त छन्दांसि सन्ति, तान्यार्षाणि, तेषामृषिच्छन्दसां चतुर्थभागो यजुषां छन्दो वेदितव्यम्। तेषां छन्दसामेकः पादो याजुषं छन्दो मन्यते। अतः कथ्यते—'तत्पादो यजुषां छन्दः साम्नां तु द्वावृचां त्रयः' इति।

मुख्यतया यजुर्मन्त्रेषु ह्येकपादानि छन्दांसि भवन्ति, साममन्त्रेषु द्विपादानि, ऋङ्मन्त्रेषु च त्रिपादानि। अतः कथ्यते—

एकोत्तरो यजुर्वर्गः साम्नां वर्गस्तु द्व्युत्तरः।
ऋचां तु त्र्युत्तरो वर्गो ब्राह्मवर्गः षडुत्तरः॥ इति।

ये यजुर्मन्त्रा अनियताक्षराः सन्ति, तेषु छन्दांसि न भवन्ति, ये च नियताक्षरा यजुर्मन्त्रास्तेषु छन्दोविधानं वर्तते। अस्मादिषेत्वेत्यादयो ये यजुर्मन्त्रा नियताक्षराः, ते सन्ति छन्दोयुक्ताः। यतस्तेषु छन्दोलक्षणानि सङ्घटन्ते। अत एकाक्षराच्चतुरुत्तरशताक्षरा ये यजुर्मन्त्रा नियताक्षरत्वाच्छन्दांस्येव, ये च तेभ्योऽधिकाक्षरसंख्याका यजुर्मन्त्रा अनियताक्षरत्वाच्छन्दांसि न सन्ति।

ऋक्प्रातिशाख्यकर्ताऽऽचार्यशौनकः षड्विंशतिभेदानां छन्दसामक्षरद्वयन्यूनत्वाद् द्वापञ्चाशद्भेदान् मन्यते, तद्भेदा विराजः कथ्यन्ते। परमाचार्यपतञ्जलिस्तु तेषां षड्विंशतिभेदानामेकाक्षरादक्षरत्रयपर्यन्तं संख्याया न्यूनत्वात् कृत-त्रेता-द्वापर-कलिनामधेयान् चतुरधिकशतभेदान् करोति; किन्तु ते सर्वे भेदा अपि छन्दसां मर्मज्ञेन विदुषाऽऽचार्यशौनकेन कृतेषु निचृद्-भुरिग्-विराट्-स्वराडादिष्ववान्तरभेदेष्वन्तर्भूता भवन्ति। यजुर्वेदे ये विद्वांसश्छन्दांसि न मन्यन्ते, ते छन्दःशास्त्रीयग्रन्थच्छन्दःसूत्ररचयितुः पिङ्गलाचार्यात्पूर्ववर्तिन आचार्या आसन्।

तदनन्तरं शौनक-पतञ्जलिप्रभृतिपूर्वाचार्यरचनाभिः[1] प्रेरितेन पिङ्गलाचार्येण कृतैरेकाक्षरादिच्छन्दोलक्षणनियमैर्ये यजुर्मन्त्रा बद्धाः, तेषु दैवीगायत्र्यादिच्छन्दोविधानं प्रवृत्तम्। तदवशिष्टा याजुषमन्त्रा ये सन्ति, तेषु चतुरुत्तरशताधिकवर्णा विद्यन्ते[1], तेऽद्यापि शौनकादिपिङ्गलोक्तच्छन्दोनियमबन्धनरहिताः स्वच्छन्दाः सन्तो यजुर्वेदीयगद्यच्छन्दोभागमलङ्कुर्वन्ति। छान्दसा विद्वांसस्तेष्वपि छन्दः-

१. शौनककृतमृक्प्रातिशाख्यम्–१७।११, तथा पातञ्जलनिदानसूत्रम्–१।२।५।

कल्पनां कुर्वन्ति[1]। एकस्मिन्नपि यजुर्मन्त्रे[2] ते विभिन्नानि छन्दांसि मन्यन्ते। इत्थन्तु यजुर्वेदे गद्यसमाप्तिरेव भवेत्, अतस्ते याजुषमन्त्रा गद्यच्छन्दोयुक्ता एव। अत्र छन्दोऽर्थमावरणमिति, ते गद्यावरणयुक्ताः।

यजुर्वेदे ये मन्त्रद्रष्टारः प्रजापतिपरमेष्ठ्यादय ऋषयः सन्ति, तेष्वेकादश-महिलर्षयोऽपि सन्ति, येषां नामानि यथा—१. सरस्वती, २. कद्रूः, ३. लोपामुद्रा, ४. विधृतिः, ५. आभूतिः, ६. वैदर्भी, ७. लौगाक्षी, ८. रम्याक्षी, ९. प्रादुराक्षी, १०. सुनीतिः, ११. गौरिवीतिश्चेति।

आसां महिलर्षीणां छान्दसः परिचयो यथा—

(१) सरस्वती—( यजुः[3]–२८।२४-४६ ) अस्याः सरस्वत्या यजुर्वेदेऽष्टा-विंशेऽध्याये २३ त्रयोविंशतिर्मन्त्राश्चतुर्विंशमन्त्रादारभ्य षट्चत्वारिंशमन्त्रपर्यन्तं सन्ति। येषु त्रिष्टुब्जगत्यतिजगतीशक्वर्यतिशक्वर्याकृतिनामधेयानि छन्दांसि प्रयुक्तानि। छन्दस्कारेषु ऋषिषु सरस्वतीयमाकृतिनाम्नश्छन्दसः प्रवर्तिका। आकृतिच्छन्दोबद्धोऽस्याः षट्चत्वारिंशो मन्त्रः।

(२) कद्रूः—(यजुः–३।६-८) सर्पराज्ञी—कद्रूरियं सार्पकुलप्रवर्तिका महिला महर्षेः कश्यपस्य ऋग्वेदीयप्रसिद्धसूक्तकारस्य[4] पत्न्यासीत्। अस्याः यजुर्वेदे तृतीयेऽध्याये मन्त्रत्रयं षष्ठमन्त्रादष्टममन्त्रपर्यन्तं प्राप्यते। एषु मन्त्रेषु गायत्रीच्छन्दसः प्रयोगः। अस्या ऋग्वेदेऽपि सूक्तमेकं प्राप्यते[5]।

(३) लोपामुद्रा—( यजुः–१७।११-१५ तथा ३६।२० ) इयं लोपामुद्रा ऋग्वेदीयप्रसिद्धसूक्तकारस्य[6] ऋषेरगस्त्यस्य पत्न्यासीत्। अस्या यजुर्वेदे सप्तदशेऽध्याये पञ्च-षट्त्रिंशेऽध्याये चैको मन्त्र इति षण्मन्त्रा विद्यन्ते। तेषु गायत्री-बृहती-पङ्क्ति-जगतीनामानि छन्दांसि प्रयुक्तानि। इयं निचृदार्षीजगतीच्छन्दसः प्रवर्तिकाऽस्ति। अस्या ऋग्वेदेऽपि सूक्तमेकं प्राप्यते[7]।

(४) विधृतिः—( यजुः–१७।६२-६९ ) अस्याः सप्तदशेऽध्याये यजुर्वेदेऽष्ट-मन्त्राः सन्ति। येष्वनुष्टुब्बृहतीपङ्क्तिनामानि छन्दांसि प्रयुक्तानि।

---

१. यजुर्वेदे–१०।४ तथा ११।५९; २. यजुर्वेदे–१०।१४।
३. यजुर्वेदः, सार्वदेशिकार्यप्रतिनिधिसभाप्रकाशितः, नवदेहली, वि० सं० २०३१।
४. कश्यपः, ऋग्वेदे–८।२९।-९।९१-९२; ५. तत्रैव–१०।१८९।
६. तत्रैव–१।१६५-१६९; ७. तत्रैव–१।१।७९।

(५) आसूतिः—( यजुः-१६।३-९ ) अस्या यजुर्वेदे सप्तमन्त्रा एकोनविंशाध्याये। येषु गायत्री-पङ्क्ति-त्रिष्टुब्जगती-शक्वरीप्रभृतिच्छन्दांसि प्रयुक्तानि।

(६) वैदर्भी—( यजुः-२०।५५-८० ) अस्या यजुर्वेदे विंशाध्याये षड्विंशतिमंन्त्राः। येष्वनुष्टुप्छन्दसः प्रयोगः।

(७) लौगाक्षी—(यजुः-२६।२ ) अस्या यजुर्वेदे षड्विंशाध्याये केवल एक एव मन्त्रः, यस्मिन् स्वराडित्यष्टिश्छन्दः प्रयुक्तम्।

(८) रम्याक्षी—( यजुः-२६।४-५ ) अस्या यजुर्वेदे षड्विंशाध्याये मन्त्रद्वयम्, यत्र त्रिष्टुब्जगतीप्रयोगः।

(९) प्रादुराक्षी—(यजुः-२६।६) अस्या यजुर्वेदे षड्विंशाध्याये मन्त्र एकः, यत्र जगतीछन्दः।

(१०) सुनीतिः—( यजुः-३३।२१ ) अस्यास्त्रयस्त्रिंशाध्याये यजुर्वेदे मन्त्र एकः, यत्र निचृद्गायत्रीच्छन्दः।

(११) गौरिवीतिः—( यजुः-३३।२८ ) अस्या यजुर्वेद त्रयस्त्रिंशाध्याये मन्त्र एक,: यत्र भुरिक्पङ्क्तिश्छन्दः प्रयुक्तम्। अस्या ऋग्वेदे[1] सूक्तत्रयं विद्यते।

एवमुपर्युक्तेषु महिलर्षिषु द्वौ महिलर्षी सरस्वती-लोपामुद्रा च छन्दःप्रवर्तिके स्तः। अवशिष्टाश्च नव छन्दःप्रयोक्तारः सन्ति, यासामस्मिन्महिलाप्रगतिकाले किलासामान्यं महत्त्वं चकास्तीति शम्।

---

१. ऋग्वेदे—५।२।९ तथा १०।७३।७४।

# शिवमहापुराणे शक्तिस्वरूपम्

आचार्यश्रीसतीशकुमारशुक्लः
वैदिक एवं पौराणिक-अनुसन्धान-संस्थानम्,
नैमिषारण्यम्, सीतापुर ।

❀ ❀ ❀

महाप्रलयकाले स्थावरजङ्गमात्मके जगति विनष्टे सर्वं तमोमयमासीत् । सूर्यग्रहनक्षत्राण्यपि नासन्[1] । चन्द्रदिनरात्रिपावकपवनभूजलानि तथा प्रकृतिरपि नासीत् । अन्यतेजो विवर्जितं शून्यं वियदेवासीत्[2] । अस्य वर्णनम् ऋग्वेदेऽपि प्राप्यते[3] । अदृष्टत्वादिरहितं शब्दस्पर्शरूपरसगन्धविवर्जितं आशादिकल्पना शून्या आसीत्[4] । तथा हि कठोपनिषदि—"अशब्दमस्पर्शमरूपमव्ययं तथा रसं नित्यमगन्धवच्च यत्[5]" इति ।

---

१. महाप्रलयकाले च नष्टे स्थावर जङ्गमे ।
आसीत्तमोमयं सर्वमनर्कग्रहतारकम् ॥ ( शि० पु० २।१।६।४ )

पुरा जगदिदं त्वासीन्नष्टस्थावरजङ्गमम् ।
चन्द्रसूर्यादिरहितं शून्यं रूपं तमोमयम् ॥ ( बृहद्धर्मपु० ३१।६ )

२. अचन्द्रमनहोरात्रमनग्न्यनिलभूजलम् ।
अप्रधानं वियच्छून्यमन्यतेजोविवर्जितम् ॥ ( शि० पु० २।१।६।५ )

३. नासदासीन्नो सदासीत् तदानीं नासीद्रजो नो व्योमा परो यत् ।
किमावरीवः कुहकस्य शर्मन्नम्भः किमासीत् गहनं गभीरम् ॥

न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीदप्रकेतः ।
आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चनास ॥

तम आसीत् तमसा गूढमग्रेऽप्रकेतं सलिलं सर्वया इदम् ।
तुच्छ्येनाभ्वपिहितं यदासीत् तपसस्तन्महिना जायतैकम् ॥ (ऋ०सं० १०।१२९।१-३)

४. अदृष्टत्वादिरहितं शब्दस्पर्शसमुज्झितम् ।
अव्यक्तगन्धरूपं च रसत्यक्तदिङ्मुखम् ॥ ( शि० पु० २।१।६।६ )

५. कठोपनिषद्—३।१५ ।

इत्थं सूचीभेद्येऽन्धतमसे सदसदात्मकं तत्तत्त्वमपि नासीत्[१], यद् योगिनो हृदयाकाशे निरन्तरं पश्यन्ति[२]। यन्मनोवाग्विषयं नास्ति[३]। तथाहि कठोपनिषद्युक्तम्[४], यन्नामवर्णस्थूलत्वकृशत्वादिरहितमस्ति[५]। अस्य वर्णनं मुण्डकोपनिषद्यपि दृश्यते[६], यद् ह्रस्वदीर्घगुरुलघुत्ववर्जितमस्ति। यस्य क्षयो वृद्धिश्च न भवति[७]।

तत् सत्यं ज्ञानमनन्तं परानन्दं श्रुतिराश्चर्येणास्तीति वदति[८]। तदप्रमेयमनाधारमविकारमनाकृतिं निर्गुणं योगिगम्यं निर्विकल्पं निरारम्भं निरूपद्रवमद्वितीयमनाद्यरहितमविकाशं चिदात्मकं केवलं श्रुतिप्रतिपाद्यं ब्रह्मैवासीत्[९]। कियता एव कालेन तस्य द्वितीयं भवितुमिच्छाऽभूत्[१०]। तथा हि बृहदारण्यकोपनिषदि प्रतिपादितम्—"**स वै नैव रेमे, तस्मादेकाकी न रमते, स द्वितीयमैच्छत्**[११]"।

तदा तेनामूर्तेन स्वलीलया स्वमूर्तेः कल्पना कृता। सा सर्वैश्वर्यगुणोपेता,

---

१. इतीदृशं यदानासीद्यत्तत्सदसदात्मकम्। (शि० पु० २।१।६।८)

२. योगिनोऽन्तर्हिताकारो यत्पश्यन्ति निरन्तरम्। (शि० पु० २।१।६।८)

३. अमनोगोचरं वाचा विषयं न कदाचन। (शि० पु० २।१।६।९)

४. नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा। (कठ० उ० १।३।१)

५. अनामरूपवर्णं च न च स्थूलं न यत्कृशम्। (शि० पु० २।१।६।९)

६. यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुः।
श्रोत्रं तत्पाणिपादम् ॥ (मुण्डक० उ० १।१।६)

७. अह्रस्वदीर्घमलघुगुरुत्वपरिवर्जितम्।
न यत्रापचयः कश्चित् तथा नोपचयोऽपि च। (शि० पु० २।१।६।११)

८. अविद्यन्ते सचकितं यदस्तीति श्रुतिः पुनः।
सत्यं ज्ञानमनन्तञ्च परानन्दं परंमहः ॥ (शि० पु० २।१।६।११)

९. अप्रमेयमनाधारमविकारमनाकृतिः।
निर्गुणं योगिगम्यञ्च सर्वव्याप्येककारकम् ॥
निर्विकल्पं निरारम्भं निर्माय निरुपद्रवम्।
अद्वितीयमनाद्यन्तमविकाशं चिदात्मकम् ॥ (शि० पु० २।१।६।१२, १३)

१०. कियता चैव कालेन द्वितीयेच्छाऽभवत् किल ॥ (शि० पु० २।१।६।१०)

११. बृ० उ० १।४।३।

शुभा, सर्वगा, सर्वरूपा, सर्वदृक्कारिणी, सर्वैकवन्द्या, सर्वाद्या, सर्वदा, सर्वसंस्कृतिश्चासीत्[१] ।

एवमद्वितीयमाद्यरहितम्, सर्वाभासं चिदात्मकं सर्वगमव्ययं ब्रह्म शुद्धरूपिणीं तामैश्वरीं मूर्तिं परिकल्प्य अन्तर्दधे[२] । अमूर्तः यत्पराख्यं तत्त्वमस्ति, तस्य मूर्तिः सदाशिव इत्युच्यते बुधाः । अर्वाचीनं पराचीनञ्च तमीश्वरेति कथयन्ति[३] ।

एवम्भूतेनैकाकिना तेन विहरता स्वशरीरात् स्वशरीरस्वरूपैवानपायिनी शक्तिः सृष्टा[४] । सा प्रमुखा माया, गुणवती, परा, विकृतिरहिता, बुद्धितत्त्वस्य जननी च कथ्यते[५] । सा शक्तिरम्बिका, प्रकृतिः, सकलेश्वरी, त्रिदेवजननी, नित्याप्रभृतिभिः संज्ञाभिः प्रथिता जातेति[६] ।

इत्थं शिवमहापुराणे शक्तेः स्वरूपं वैविध्यपूर्णं चकास्ति । स्वाभाविकञ्चैतत् 'शिव-शक्त्योः' सहाख्यानमनुध्यानञ्च ।



---

१. अमूर्तेन स्वमूर्तिञ्च तेनाकल्पि स्वलीलया ।
सर्वैश्वर्यगुणोपेता सर्वज्ञानमयी शुभा ॥
सर्वगा सर्वरूपा च सर्वदृक्सर्वकारिणी ।
सर्वैकवन्द्या सर्वाद्या सर्वदा सर्वसंस्कृतिः ॥ ( शि० पु० २।१।६।१५ )

२. परिकल्प्येति तां मूर्तिमैश्वरीं शुद्धरूपिणीम् ।
अद्वितीयमनाद्यन्तं सर्वाभासं चिदात्मकम् ॥
अन्तर्दधे पराख्यं यद् ब्रह्म सर्वगमव्ययम् ॥ ( शि० पु० १।६।१७ )

३. अमूर्तं यत्पराख्यं वै तस्य मूर्तिः सदाशिवः ।
अर्वाचीना पराचीना ईश्वरं तं जगुर्बुधाः ॥ ( शि० पु० २।१।६।१८ )

४. शक्तिस्तदैकलेनापि स्वैरं विहरता तनुः ।
स्वविग्रहात्स्वयं सृष्टा स्वशरीरानपायिनी ॥ ( शि० पु० २।१।६।१९ )

५. प्रधानं प्रकृतिं ताञ्च मायां गुणवतीं पराम् ।
बुद्धितत्त्वस्य जननीमाहुर्विकृतिवर्जिताम् ॥ ( शि० पु० २।१।६।२० )

६. सा शक्तिरम्बिका प्रोक्ता प्रकृतिः सकलेश्वरी ।
त्रिदेवजननी नित्या मूलकारणमित्युत ॥ ( शि० पु० २।१।६।२१ )

# अथर्ववेदीय गोपथब्राह्मण की भाषा एवं शैली

डॉ० रामशरण वाजपेयी

एम., ए., पी.-एच्० डी०, साहित्याचार्य, साहित्यरत्न,

अनुसन्धान-सहायक, पौ. वै. अनुसन्धान-संस्थान,

नैमिषारण्य, सीतापुर ।

❀❀❀

ब्राह्मणग्रन्थों की भाषा वैदिक-संहिताओं की भाषा से बहुत कुछ साम्य रखती है। ब्राह्मणग्रन्थों की भाषा, मुख्यतया गद्य-विकास ब्राह्मणग्रन्थों से ही प्राप्त होता है।

इसकी भाषा अन्य ब्राह्मण शतपथ, ताण्ड्य, ऐतरेय जैसे ब्राह्मणों जैसी है। उसी कोटि की है। कुछ अंशों में भिन्न है, जो गोपथब्राह्मण की अपनी विशेषताएँ हैं। इसकी भाषा स्पष्ट है। भाषा सरल, कथा-कथानक के अनुकूल है। एक-एक शब्द अलग-अलग स्पष्ट होता है। समास विहीन पदों का भी प्रयोग प्रचुरता से किया गया है[१]। भाषा की प्रवाहमयता भी दर्शनीय है। भाषा में प्रवाह होने से पाठक के मन में रुचि पैदा होती है[२]। समासों का बहुत अल्प मात्रा में प्रयोग हुआ है। समासों का प्रयोग जहाँ कहीं हुआ भी है, तो पाठक को काठिन्य का अनुभव नहीं होता। समास-रहित भाषा के उदाहरणों की प्रचुरता है[३]। गोपथब्राह्मण की भाषा की प्रमुख विशेषता है 'इतिकरण' की। गोपथब्राह्मण की भाषा में ही नहीं; अपितु समस्त ब्राह्मणग्रन्थों में 'इतिकरण' की प्रचुरता देखी जाती है। गोपथब्राह्मण के अनेक स्थल हैं, जो उदाहरणार्थ प्रस्तुत किये जा सकते हैं। गोपथब्राह्मण की प्रत्येक कण्डिका में कम से कम एक अवश्य ही 'इति' का प्रयोग किया गया है। किसी-किसी कण्डिका में अधिक बार भी देखा जाता है[४]। 'इति' का प्रयोग कर गोपथ-ब्राह्मण अपनी बात को स्पष्ट करता है। 'इतिकरण' ही इसकी भाषा की प्राचीनता एवं अन्य ब्राह्मणग्रन्थों की भाषा से साम्य कराता है। 'इतिकरण' ही ब्राह्मणग्रन्थों की भाषा का परिचायक है।

---

१. गो० ब्रा० १।३।७; २. वही २।१।५; ३. वही—२।१।२०; ४. वही १।२।१६।

ब्राह्मणग्रन्थों के पूर्ववर्ती साहित्य में 'इति'करण का प्रयोग नहीं मिलता है। परवर्ती साहित्य में 'इतिकरण' का भी प्रयोग मिलता है। 'इतिकरण' का प्रयोग सर्वप्रथम ब्राह्मणग्रन्थों से होता है। 'इति' का प्रयोग ब्राह्मणग्रन्थों में कई अर्थों में हुआ है। कहीं तो 'इति' का प्रयोग किसी बात को स्पष्ट करने के लिए हुआ है, कहीं-कहीं सहज ही भाषा के प्रवाह में प्रयोग होता हुआ देखा जाता है, तो कहीं अव्ययों के साथ प्रयुक्त है। स्पष्टीकरण के अर्थ में प्रयुक्त 'इति' का एक उदाहरण देखें—**"अथात इह शुद्ध इह पूर्ण इति, शुद्धः प्रणवः स्याच्छस्वानुवचनयोर्मध्य इति"**।

गोपथब्राह्मण की यह अतिरिक्त विशेषता है कि भाषा में अव्ययों का प्रयोग भी यथास्थान प्रचुरता से किया गया है, जो कि ब्राह्मणग्रन्थों का परिचायक है। गोपथब्राह्मण में अन्य ब्राह्मणग्रन्थों की भाँति 'उ', 'ह', 'वा', वै,' 'खलु' इत्यादि निपातों का प्रयोग देखने योग्य है। ब्राह्मणग्रन्थों से यही प्रयोग प्रारम्भ होकर आरण्यक, उपनिषद् और किञ्चित् परवर्ती साहित्य तक विद्यमान है, जैसा कि आरण्यक और उपनिषदों की भाषा में देखा जाता है।

संहिताओं में भी कहीं-कहीं छन्दों की पादपूर्ति हेतु 'इति' का प्रयोग देखा जाता है, पर ब्राह्मणग्रन्थों में इसके प्रयोग का प्रयोजन भी है। गोपथब्राह्मण[१] का एक उदाहरण द्रष्टव्य है—'सजाया ह उ ह वा अवेनायान्ते नैवान्तं परिदधाति'[२]। इस उदाहरण में 'उ', 'ह', 'वा' का प्रयोग सहज ही भाषा के प्रवाह में हुआ है। इस ग्रन्थ में 'ह' का प्रयोग अपनी बात की निश्चितता का द्योतन कराता है। इसी प्रकार भाषा में 'वै' का प्रयोग भी प्रचुर मात्रा में हुआ है। 'वै' का प्रयोग भी इसकी भाषा की विशेषता है। 'वै' का प्रयोग पूर्वस्मृति के लिए हुआ है। 'वै' का प्रयोग करके कोई बात कही नहीं जाती है, तो इसका अर्थ यह है कि बात पूर्व में भी कही जा चुकी है। उदाहरण इस प्रकार द्रष्टव्य है—'खलु ह वै दीक्षितो य आत्मनि वसूनि धत्ते...'[३]।

इसमें 'वै' का प्रयोग दीक्षित संज्ञा की स्मृति दिलाता है कि वही दीक्षित अपने में निश्चितरूप से धन को धारण करता है। 'खलु'शब्द का प्रयोग भी निश्चितता के लिये किया गया है। 'किल-शब्द का प्रयोग भी अन्य ब्राह्मण-ग्रन्थों की भाँति हुआ है।

उपलब्ध वर्तमान गोपथब्राह्मण पर, जीवानन्द विद्यासागर अथवा किसी भी संस्करण में, न तो सायणभाष्य है, न भाषा में स्वर-चिह्न ही हैं। शतपथ जैसे ब्राह्मणमें स्वर-चिह्न आज भी विद्यमान हैं। इसका अर्थ यह नहीं है कि गोपथ-

१. गोपथब्राह्मण—२।३।११; २. वही—२।४।८; ३. वही—१।३।२२।

यदीयपादाब्जयुगान्तभूमौ लुठेच्छिरो यस्य हि पाञ्चभौतम् ।
तद्दिव्यपादं शिरसा वहन्ति सुरेन्द्रनार्यः खलु तं नमामि ॥

तद्दिव्यसिंहं हृतपापसंघं पादाश्रितानां करुणाब्धिसिंहम् ।
पादाब्जसंघट्टविघट्टमानब्रह्माण्डभाण्डं प्रणमामि चण्डम् ॥

सटाच्छटाकम्पनशीर्यमाणघनौघविद्रावितपापसङ्घम् ।
चण्डाट्टहासान्तरिताब्दशब्दं त्रिलोकगर्भं नृहरिं नमामि ॥

नमस्ते नमस्ते नमस्तेऽद्य विष्णो परित्राहि दीनानुकम्पिन्ननाथम् ।
भवन्तं समासाद्य मे देहबन्धो मुरारे न संसारिकारागृहेऽस्तु ॥

हयमेधसहस्रान्ते यथा त्वां चर्मचक्षुषा ।
दिव्यरूपं प्रपश्यामि तथानुक्रोशय प्रभो ॥

यथा चेज्यासहस्रं मे निर्विघ्नं तत्समाप्यते ।
यज्ञेश त्वत्प्रसादान्मे तथा सान्निध्यमस्तु मे ॥
कोटयः पापराशीनां क्षयं यान्ति यथा प्रभो ।
धर्मार्थकामा हस्तस्था नैषां चित्रं स्तुवन्ति ये ।
मोक्षस्य भाजनं विष्णो ते नरा ये तवाश्रयाः ॥

( स्क० महापु० वैष्णव० २।१६।३८—५ )

## १३. इन्द्रद्युम्नकृता स्तुतिः

(ग)—नमस्ते जगदाधार जगदात्मन्नमोऽस्तु ते ।
कैवल्यत्रिगुणातीत दुःखध्वंस नमोऽस्तु ते ॥
सुशुद्धनिर्मलज्ञानस्वरूपाय नमोऽस्तु ते ।
शब्दब्रह्माभिधानाय जगद्रूपाय ते नमः ॥
संसारपतितश्रान्तदुःखध्वंस नमोऽस्तु ते ।
दुर्भेद्यहृदयग्रन्थिभेदकाय नमोऽस्तु ते ॥
द्विसप्तभुवनागारमूलस्तम्भाय ते नमः ।
ब्रह्माण्डकोटिघटनाशिल्पिने चक्रिणे नमः ॥
करुणामृतपाथोधि सुधाधाम्ने नमो नमः ।
दीनोद्धारैकगुह्याय कृपापाथोधये नमः ॥
प्रकाशकानां सूर्यादि ज्योतिषां ज्योतिषे नमः ।
प्रतिस्वस्वनदीप्ताय अन्तःपापाग्नये नमः ॥
पावकाय पवित्राय पवित्राणां नमो नमः ।
गरिष्ठाय वरिष्ठाय द्राघिष्ठाय नमो नमः ॥
नेदिष्ठाय दविष्ठाय क्षोदिष्ठाय नमो नमः ।
वरेण्याय सुपुण्याय नारायण नमोऽस्तु ते ॥

परित्राहि जगन्नाथ दीनबन्धो नमोऽस्तु ते ।
निस्तीर्णोऽहं भवाम्भोधिं प्राप्य त्वां तरणिं सुखम् ॥
त्वयि दृष्टे रमानाथ क्लेशा व्यपगता मम ।
चिदानन्दस्वरूपं त्वां प्राप्तानां दुःखसंक्षयः ॥
ध्रुवं नाथ समुत्पन्नपरमानन्दहेतुकम् ।
त्राहि त्राहि भवाम्भोधिमग्नं मां दीनचेतसम् ॥
मध्याह्नार्कोदिते व्योम्नि कुतः संतमसोदयः ।
ध्यानस्थितः स्तुवन्नेवं प्रणम्य जगदीश्वरम् ॥
(स्क० महापु० वैष्णव० २।१७।११९—१३०)

## १४. इन्द्रद्युम्नकृता स्तुतिः

(घ)—त्वदङ्घ्रिपाथोजयुगं मुरारे नोपासितं जन्मसु पूर्वजेषु ।
तत्कर्मणां दारुणपाकभाजं दीनं परित्राहि कृपाम्बुधे माम् ॥
क्व निर्मलं त्वच्चरणाब्जयुग्मं विरिञ्चिरुद्रेन्द्रकिरीटमग्नम् ।
क्वाहं कुदीनः शकृदस्रमांसमूत्रास्थिसंघैः पिहितस्त्वचा वै ॥
असारसंसारपरिभ्रमेण श्रमातुरस्त्वां कथमीश जाने ।
जानन्ति ते त्वां खलु देवदेव येषां भवो दुःखभवप्रकाशः ॥
प्रभो मया दुःखमनेकजन्मपापार्जितं भुक्तमनेकभावम् ।
शुभार्जितो यः सुखलेशभावो निदर्शनं यन्मधुपृक्ततिक्ते ॥
यदेव सौख्यानुभवाय देव कर्मार्जितो मे विषयोपभोगः ।
स एव दुःखं परिणामतो मे न मद्विधो दुःखिजनोऽस्ति चान्यः ॥
विभो यदि त्वां मनसापि पूर्वमुपास्तमन्यद्विपमेक्षणोऽहम् ।
कथं तदा लप्स्यमनेकजन्म पुनः पुनर्भोग्यमशेषदुःखम् ॥
विभुत्वदासत्वपितृत्वपुत्रप्रियत्वमातृत्वधनित्वभावैः ।
वध्यत्वहिंसत्वपतित्वजायाभावैश्च तिर्यक्त्वसुरादिभावैः ॥
नीचोर्ध्वभावं बहुशः सकृद्वा भवाङ्गणेऽस्मिँल्लुठतानुभूतम् ।
न वा मुरारे तवपादपद्मदूरीभवस्येष्ट फलं हि चैतत् ॥
कोशं बलं चैतदशेषपृथ्वीधनैर्वृतं यौवनरूपरूप्यः ।
मनोऽनुकूलाः शतशः स्त्रियश्च निष्कण्टकं मे नृपमण्डलं च ॥
साम्राज्यता चापि भरो महान्मे त्वज्ज्ञानहीनस्य पशोरिवायम् ।
भारावतारं कुरु मे कृपाब्धे सदैव तत्रोदितखेदयोगः ॥
दीनानुकम्पिन्करिणो विमुक्तिः कृता विभो त्वत्स्मृतिमात्रकेण ।
भ्रान्तं घटीयन्त्रवदत्र नाथ मां त्रातुमर्हस्यनुकम्पिभावात् ॥

न मे त्वदन्यः खलु बन्धुरत्र प्रवाहविभ्रष्टतरुस्वभावे।
पापीयसी बुद्धिरुपेतभावा स्नेहानुबन्धा विषयेऽभिभेद्या॥
अहर्निशं मे तव पादपद्मान्नापैतु मन्प्रार्थितमेतदेव।
त्वां सच्चिदानन्दसुपूर्णसिन्धुं प्राप्तास्तु ये जन्मसहस्रभाग्यैः॥
किं ते हि पश्यन्ति लवैकसौख्यमनेकदुःखं विषयेन्द्रजालम्।
क्व बन्धनं कर्मभिरिष्टलेशदुःखाकरग्रन्थिशतैरभेद्यम्॥
अनन्तमाद्यन्तविहीनमेकमानन्ददं त्वत्पदपङ्कजं क्व।
मायाम्बुधौ ते ममताभ्रमौ च कुकर्मनक्रायितगर्तमध्ये॥
निराश्रयं मे पतितं विलासकटाक्षपातेन नयाद्य तीरम्।
स्वकार्यसंसाधनयाश्रितानां सम्पादनायेष्ट विधेरजस्रम्॥
भ्राम्यन्तमात्मीयहितं विमृज्य मां त्राहि मूढं सहजानुकम्पिन्।
क्षुद्राय कार्याय वहुभ्रमन्तमप्राप्य मूलं परमेश्वरं त्वाम्॥
आयासपात्रं परमं सुदीन मां त्राहि विष्णो जगदेकवन्द्य।
वेदान्तवेद्याव्यय विश्वनाथ त्वमीशिषे हेतुमघौघराशीन्॥
तं त्वां परित्यज्य सुखैकहेतुं क्षुद्राशयं मां परिपाहि विष्णो।
प्रसुप्त एषोऽखिलभूतसंघश्चतुर्विधो यत्कृतमोहरात्रौ॥
त्वज्ज्ञानभानूदयमेत्य चान्ते प्रबोध्यते त्वां शरणं प्रपद्ये।
त्वमेक एवाखिललोककर्त्ता फणासहस्रैः परिवीतमूर्तिः॥
पर्यायवृत्त्या बलिनां वरिष्ठ त्वामीशितारं शरणं प्रपद्ये।
यया सृजस्यत्सि जगन्ति नाथ वक्षः सरोजासनया स्व शक्त्या॥
तां भद्ररूपां जगदाश्रयां ते देवारणिं पादयुगे नतोऽस्मि।
यदंशुजालप्रतिसृष्टमेतद्ब्रह्माण्डजालं करसङ्गि नाथ॥
सुदर्शनं दैत्यबलस्य हन्तृ चक्राभिधं त्वां प्रणतः सुदर्शनम्।
स्तुत्वेत्थं नृपतिश्रेष्ठः साष्टाङ्गं प्रणनाम सः॥
परित्राहि जगन्नाथ मग्नं संसारसागरे।
अनाथबन्धो कृपया दीनं मां तमसाकुलम्॥
(स्क० महापु० वैष्णव० २।२०।२-२५)

## १५. देवैः कृता नृसिंहस्तुतिः

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।
स भूमिं सर्वतो व्याप्य अध्यतिष्ठद्दशाङ्गुलम्॥
यः पुमान्परमं ब्रह्म परमात्मेति गीयते।
भूतं भव्यं भविष्यं च सर्वं पुरुष एव तत्॥
एतावानस्य महिमा ज्यायानेष पुमान्प्रभुः।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि॥

छन्दांसि जज्ञिरे त्वत्तस्तत्तो यज्ञपुमानपि ।
त्वत्तोऽश्वाश्च व्यजायन्त गावो मेषादयस्तथा ॥
ब्राह्मणा मुखतो जाता बाहुजाः क्षत्रियास्तव ।
विशस्तवोरुजा पद्भ्यां तथा शूद्राः समागताः ॥
मनसश्चन्द्रमा जातश्चक्षुषस्ते दिवाकरः ।
कर्णाभ्यां श्वसनः प्राणैर्जिह्वायां हव्यवाडपि ॥
नाभितो गगनं द्यौश्च मूर्ध्नस्ते समवर्त्तत ।
पादाभ्यां ते धरा जाता दिशश्चाष्टौ श्रुतेर्गताः ॥
सप्तासन्परिधयस्त्वत्त एकविंशत्समिच्च वै ।
चराचराः सर्वभावास्त्वत्त एव हि जज्ञिरे ॥
त्वमेव जगतां नाथस्त्वमेव परिपालकः ।
उग्ररूपश्च संहर्ता त्वमेव परमेश्वर ॥
त्वमेव यज्ञो यज्ञांशस्त्वं यज्ञेशः परात्परः ।
शब्दब्रह्मपरं त्वं शब्दब्रह्मासि विश्वराट् ॥
स्वराट् सम्राड्जगन्नाथ विराडसि जगत्पते ।
अधश्चोर्ध्वं च तिर्यक्त्वं त्वया व्याप्तं जगन्मय ॥
प्राप्नुवन्ति परं स्थानं त्वां यजन्तश्च याज्ञिकाः ।
भोज्यं भोक्ता हविर्होता हवनं त्वं फलप्रदः ॥
समस्तकर्मभोक्ता त्वं सर्वकर्मात्मकः प्रभो ।
सर्वकर्मोपकरणं सर्वकर्मफलप्रदः ॥
कर्मप्रेरयिता त्वं हि धर्मकामार्थसिद्धिदः ।
त्वामृते मुक्तिदः कोऽन्यो हृषीकेश नमोऽस्तु ते ॥

नमोस्त्वनन्ताय सहस्रमूर्त्तये सहस्रपादाक्षिशिरोरुबाहवे ।
सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ॥

वयं च्युताधिकारास्त्वां प्रपन्नाः शरणं प्रभो ।
त्राहि नः पुण्डरीकाक्ष अगतीनां गतिर्भव ॥
संसारपतितस्यैको जन्तोस्त्वं शरणं प्रभो ।
त्वत्सृष्टौ त्वादृशो नास्ति यो दीनपरिपालकः ॥
दीनानाथैकशरणं पिता त्वं जगतः प्रभो ।
पाता पोष्टा त्वमेवेशं सर्वापद्विनिवारकः ॥
त्राहि विष्णो जगन्नाथ त्राहि नः परमेश्वर ।
त्वामृते कमलाकान्त कः शक्तः परिरक्षणे ॥
अन्तर्यामिन्नमस्तेऽस्तु सर्वतेजोनिधे नमः ॥

(स्क० महापु० वैष्णव० २।२४।७-२५ )

## १६. ब्रह्माकृता जगन्नाथस्तुतिः

नमस्तुभ्यं नमो मह्यं तुभ्यं मह्यं नमोनमः।
अहं त्वं त्वमहं सर्वं जगदेतच्चराचरम् ॥

महदादि जगत्सर्वं मायाविलसितं तव।
अध्यस्तं त्वयि विश्वात्मंस्त्वय्यैव परिणामितम् ॥

यदेतदखिलाभासं तत्त्वदज्ञानसम्भवम्।
ज्ञाते त्वयि विलीयेत रज्जुसर्पादिबोधवत् ॥

अनिर्वक्तव्यमेवेदं सत्त्वात्सत्त्वविवेकतः।
अद्वितीय जगद्भास स्वप्रकाश नमोऽस्तु ते ॥

विषयानन्दमखिलं सहजानन्दरूपिणः।
अंशं तवोपजीवन्ति येन जीवति जन्तवः ॥

निष्प्रपञ्च निराकार निर्विकार निराश्रय।
स्थूलसूक्ष्माणुमहिमन्स्थौल्यसूक्ष्मविवर्जितः ॥

गुणातीत गुणाधार त्रिगुणात्मन्नमोऽस्तु ते।
त्वन्मायया मोहितोऽहं सृष्टिमात्रपरायणः ॥

अद्यापि न लभे शर्म अंतर्यामिन्नमोऽस्तु ते ॥

त्वन्नाभिपङ्कजाज्जातो नित्यं तत्रैव संस्तुवन्।
नातिक्रमितुमीशोऽस्मि मायां ते कोऽन्य ईश्वरः ॥

अहं यथाण्डमध्येऽस्मिन्रचितः सृष्टिकर्मणि।
तथानुलोमकलिता ब्रह्माण्डे ब्राह्मकोटयः ॥

सार्द्धत्रिकोटिसंख्यानां विरिञ्चीनामपि प्रभो।
नैकोऽपि तत्त्वतो वेत्ति यथाहं त्वत्पुरः स्थितः ॥

नमो चिन्त्यमहिम्ने ते चिद्रूपाय नमो नमः।
नमो देवाधिदेवाय देवदेवाय ते नमः ॥

दिव्यादिव्यस्वरूपाय दिव्यरूपाय ते नमः।
जरामृत्युविहीनाय मृत्युरूपाय ते नमः ॥

ज्वलदग्निस्वरूपाय मृत्योरपि च मृत्यवे।
प्रपन्नमृत्युनाशाय सहजानन्दरूपिणे ॥

भक्तिप्रियाय जगतां मात्रे पित्रे नमो नमः।
प्रणतार्तिविनाशाय नित्योद्योगिन्नमोऽस्तु ते।
नमो नमस्ते दीनानां कृपासहजसिन्धवे ॥

पराय पररूपाय परम्पाराय ते नमः।
अपारपारभूताय ब्रह्मरूपाय ते नमः॥
परमार्थस्वरूपाय नमस्ते परहेतवे।
परम्परापरिव्याप्तपरतत्त्वपराय ते॥
प्रणतार्तिविनाशाय नमः स्वात्मैकभानवे।
पुरा यत्प्रार्थितं स्वामिन्सृष्टिभारावतारणे॥
तत्कुरुष्व जगन्नाथ सहजानन्दरूपभाक्।
त्वयि प्रसन्ने किं नाथ दुर्लभं मयि विद्यते॥
त्वयैवाहं पृथग्लीलाभेदाद्भिन्नः कृपाम्बुधे।
अज्ञानतिमिरच्छन्ने जगत्कारागृहान्तरे॥
भ्राम्यन्न द्वारमाप्नोति त्वामृते मुक्तिहेतवे।
नमो नमस्ते जगदेकवन्द्य सुरासुराभ्यर्चितपादपद्म।
नमो नमस्तापहरैकचन्द्र नमो नमः शर्मसुबोधसान्द्र॥
नमो नमः कल्पकदूरभूत दुष्प्राप्यकामप्रद कल्पवृक्ष।
दीनाशरण्यप्रणतैकदुःखसङ्घोद्धृतौ नित्यसुबद्धपक्ष॥
प्रसीद जगतां नाथ मग्नानां दुःखसागरे।
कटाक्षलीलापातेन त्रायस्व करुणाकर॥
(स्क० महापु० वैष्णव० २।२७।१५-२८)

## १७. जैमिनिकथितं जगन्नाथस्तोत्रम्

देवदेव जगन्नाथ संसारार्णवतारक।
भक्तानुग्राहकसदा रक्ष मां पादयोर्नतम्॥
जय कृष्ण जगन्नाथ जय सर्वाघनाशन।
जयाशेषजगद्वन्द्यपादाम्भोज नमोऽस्तु ते॥
जय ब्रह्माण्डकोटीश वेदनिःश्वासवातक।
अशेष जगदाधार परमात्मन्नमोऽस्तु ते॥
जय ब्रह्मेन्द्ररुद्रादिदेवौघप्रणतार्तिनुत्।
जयाखिल जगद्धामन्नन्तर्यामिन्नमोऽस्तु ते॥
जय निर्व्याजकरुणापाथोधे दीनवत्सल।
दीनानाथैकशरण विश्वसाक्षिन्नमोऽस्तु ते॥
संसारसिन्धुसलिले मोहावर्त्ते सुदुस्तरे।
षडूर्मिकुलदुष्पारे कुकर्मग्राहदारुणे॥

निराश्रये निरालम्बे निःसारे दुःखफेनिले ।
तव मायागुणैर्बद्धमवशं पतितं ततः ॥

मां समुद्धर देवेश कृपापाङ्गविलोकनैः ।
तत्र मग्नं सुरश्रेष्ठ सुप्रसाद प्रकाशक ॥

एक एव जगन्नाथ बन्धुस्त्वं भवभीरुणाम् ।
बुभुक्षा च पिपासा च प्राणस्य मनसः स्मृतौ ॥

शोकमोहौ शरीरस्य जरामृत्युर्वपुर्भवः ।
त्वत्सृष्टौ तादृशो नास्ति यो दीनपरिपालकः ॥

अवतीर्णोऽसि लोकानामनुग्रहधिया विभो ।
पूर्णकामस्य ते नाथ किमन्यत्कारणं क्षितौ ॥

त्वत्पादपद्ममासाद्य न चिन्ताऽस्ति जगत्पते ।
यतस्ते चरणाम्भोजं चतुर्वर्गैकसाधनम् ॥

दर्शनात्सर्वलोकानां सर्ववाञ्छाफलप्रदम् ।
ततः सीरध्वज शेषमन्त्रेण परिपूजयेत् ॥

द्वादशाक्षरमन्त्रेण नाम्ना वा प्रणवादिना ।
एकाग्रमानसो भूत्वा प्रणिपत्य प्रसादयेत् ॥

जय राम सदाराम सच्चिदानन्दविग्रह ।
अविद्यापङ्करहित निर्मलाकृतये नमः ॥

जयाखिलजगद्भारधारणश्रमवर्जित ।
तापत्रयविकर्षाय हलं कलयसे सदा ॥

प्रपन्नदीनत्राणाय स्फुटनेत्रसरोरुह ।
त्वमेवेश पराशेषकलुषक्षालनप्रभुः ॥

प्रसन्नकरुणासिन्धो दीनबन्धो नमोऽस्तु ते ।
चराचराफणाग्रेण धृता येन वसुन्धरा ॥

मामुद्धरास्माद्दुष्पाराद् भवाम्भोधेरपारतः ।
परापराणां परम परमेश नमोऽस्तु ते ॥

(स्क० महापु० वैष्णव० २।३०।३६-५४)

## १८. जैमिनिकथितं विष्णुस्तोत्रम्

सर्वव्यापिञ्जगन्नाथ भूतभव्यभवत्प्रभो ।
त्राहि मां पुण्डरीकाक्ष विष्णो संसारसागरात् ॥

एकार्णवजले रौद्रे निरालम्बे पुरा मधुम् ।
अवधीर्विश्वरक्षार्थं मधुसूदन रक्ष माम् ॥

त्रीन्विक्रमान्क्रमित्वा यो हत्वा दैत्यबलं महत् ।
त्रैलोक्यं पालयामास त्रिविक्रम नमोऽस्तु ते ॥

कृत्वा वामनकं रूपमृग्यजुःसामगर्भकम् ।
मोहयित्वाऽद्भुतं रूपं तस्मै मायाविने नमः ॥

यः श्रियं धारयेन्नित्यं हृदि भक्तेभ्य एव च ।
ददा त्वयि श्रियं तस्मै श्रीधराय नमोऽस्तु ते ॥

इन्द्रियाणामधिष्ठाता यः सर्वेषां सदा प्रभुः ।
सुखैकहेतुर्भक्तानां हृषीकेश नमोऽस्तु ते ॥

यन्नाभिपद्मसम्भूतं जगदेतच्चराचरम् ।
विधातुरासनं नित्यं पद्मनाभ नमोऽस्तु ते ॥

यस्यैतत्त्रिगुणैर्बद्धं जगदेतच्चराचरम् ।
दाम्ना बद्धः स गोप्या तु दामोदर नमोऽस्तु ते ॥

त्रैलोक्यविप्लवकरं हतवान्केशिदानवम् ।
ईशिता सर्वसौख्यानां त्राहि केशव मां प्रभो ॥

स्रष्टा ससर्ज भूतानि जगतामादिकारणम् ।
अचिन्त्यमहिमन्विष्णो नारायण नमोऽस्तु ते ॥

मायया यस्य विश्वं वै मोहितं यदनाद्यया ।
सर्वधर्मस्वरूपाय माधवाय नमो नमः ॥

ज्ञानिनां ज्ञानगम्यस्त्वमगतीनां गतिप्रदः ।
सम्पूर्णमस्तु गोविन्द त्वत्प्रसादाद्व्रतं मम ॥

( स्क० महापु० वैष्णव० २।४४।९-२० )

## १९. दक्षकृता जगन्नाथस्तुतिः

देवदेव जगन्नाथ सहजानन्द निर्मल ।
संसारार्णवसंमग्नांस्त्राहि नः परमेश्वर ॥

नानाविधैश्च सन्तापैः सन्तप्तान्मानवानिमान् ।
ममानुक्रोशबुद्ध्या वै शुभदृष्ट्याऽमृतेन च ॥

सन्तर्पय तृणाच्छुष्कान्कृष्ण मेऽद्य नमोऽस्तु ते ।
कलिकल्मषसम्मूढानुद्धर्तुं जगतांपते ॥

अवतारोऽयमेतस्मिन्नीलाचलगुहान्तरे ।
चिरकालप्ररूढानां दुस्त्यजानां महांहसाम् ॥
राशिं दग्धुं त्वमेवेशो दीनानाथकृपाकर ।
त्वद्दर्शनमहायोगे यमाद्यष्टाङ्गवर्जिते ॥
येषां मतिः समुत्पन्ना चतुर्वर्गैकसाधने ।
न ते शोचन्ति दुष्पारे भवारण्ये महामये ॥
कर्मानपेक्षं देवेश नात्मज्ञानं विमोचकम् ॥
जय कृष्ण जयेशान जयाक्षर जयाव्यय ।
प्रसीदानुगृहाणेमान्दीनान्मूढान्विचेतसः ॥

(स्क० महापु० वैष्णव० २।४६।२४-३१)

## २०. नारदकृता विष्णुस्तुतिः

यः सर्वसाक्षी जगतामधीश्वरो
भक्तेच्छया जातशरीरसम्पदः ।
कृपामहांभोनिधिराश्रितानां
प्रसीदतां पावनदिव्यमूर्तिः ॥
हिताय लोकस्य सतां पुनर्मनः
सुतोषणायाचिरमुत्कलादिभिः ।
प्रसन्नलीलाहसितावलोकनः
प्रसीदतां सत्त्वनिकायमूर्त्तिमान् ॥
कन्दर्पलावण्यविलाससुन्दरः
प्रसन्नगम्भीरगिरेन्दिरोत्सवः ।
स्वमाश्रितानां वरकल्पपादपः
प्रसीदतां दीनदयार्द्रमानसा ॥
यदङ्घ्रिपद्मार्चननिर्मलान्तरा
ज्ञानासिना शातितबन्धहेतवः ।
विदन्ति यद्ब्रह्मसुखं गतक्लमाः
प्रसीदतां दीनदयार्द्रमानसः ॥
संसारवारांनिधिबद्धसेतु-
र्यः सृष्टिपालान्तविधानहेतुः ।
उपान्तनामा गुणलब्धमूर्त्तिः
प्रसीदतां ब्रह्मसुखानुभूतिः ॥

य इन्द्रियाधिष्ठितभूतसूक्ष्मा-
　　द्विकासहेतुर्द्युतिमद्वरिष्ठः　　।
जीवात्मतां गच्छति मायया स्वया
　　स एक ईशो भगवान्प्रसीदताम् ॥
स्वदृग्गुणैर्येन विलिप्यते महान्
　　गुणाश्रयं येन च पाञ्चभौतिकम् ।
एकोऽपि　नानागुणसंप्रयुक्तः
　　प्रसीदतां　दीनदयालुवर्यः ॥
यस्यानुवर्तिनो देवा विपदां पदमम्बुधिम् ।
कृत्वा वत्सपदं स्वर्गे निरातंका वसन्ति हि ॥
नमस्ते वासुदेवाय नमः संकर्षणाय च ।
प्रद्युम्नायानिरुद्धाय सर्वभूतात्मने नमः ॥
अद्य मे जीवितं धन्यमद्य मे सफलं तपः ।
अद्य मे सफलं ज्ञानं दर्शनात्ते जनार्दन ॥

श्रीभगवानुवाच—

तुष्टोऽहं तपसानेन स्तोत्रेण तव नारद ।
त्वत्तो भक्तो न मे कश्चित्त्रिषु लोकेषु विद्यते ॥
वरं वरय भद्रं ते वरदोऽहं तवाग्रतः ।
मद्दर्शनात्ते कामः स्यात्संसिद्धो विद्धि नारद ॥

( स्क० महापु० वैष्णव० ३।३।२१-४० )

## २१. मार्कण्डेयकृता विष्णुस्तुतिः

अशाश्वते च संसारे सारे ते चरणाम्बुजे ।
समुद्धारः कथं नृणां त्राहि मां परमेश्वर ॥
तापत्रयपरिश्रान्तमनेकाज्ञानजृम्भितम्　।
संसारकुहरे भ्रान्तं त्राहि मां कृपयाऽच्युत ॥
अनेकयोनियन्त्रेषु　निःसृतेस्तनुवेदनाम् ।
गर्भवासकृतां प्राप्तं त्राहि मां करुणाम्बुधे ॥
कृमिभक्षितसर्वाङ्गं क्षुत्पिपासाकुलं च हि ।
आन्त्रमालाकुले गर्भे त्राहि मां मधुसूदन ॥
अमेध्यादिभिरालिप्तं　निश्चेष्टश्रमसमाकुलम् ।
स्मरन्तं निजकर्मोत्थं त्राहि मां मधुसूदन ॥

वचनादाननिःश्वासाशक्तं भयमुपागतम् ।
गर्भवासमहादुःखं त्राहि मां मधुसूदन ॥

जरामरणबाल्यादिदुःखसंसारपीडितम् ।
दुःखाब्धौ सुखबुद्धिं मां कृपासिन्धो प्रपालय ॥

कदाचित्कृमितां प्राप्तं कदाचित्स्वेदजन्मिताम् ।
कदाचिदुद्भिज्जत्वं च कदाचिन्नरतां गतम् ॥

सर्वयोनिसमापन्नं विपन्नं विगतप्रभम् ।
अनाथं त्वां समापन्नं त्राहि मां कृपयाऽच्युत ॥

( स्क० महापु० वैष्णव० ३।१।५४-६२ )

## २२. गरुडकृता स्तुतिः

जय जय त्रिभुवनजनमनोभवन विदलिताघगुणसकल-गीर्वाणवन्दितचरणकमलयुगलपरिमलबहलरिपुवनविभञ्जनविद्योतमान सकलसुरासुरमुकुटकोटिविलसितनिजपीठकमलनिरसित-निजजनहृदयतिमिरपटलबहल हिमकर इव त्रिविधसन्ताप-संदोहहरणचरण जगदुदयस्थितिलयविलासविलसितत्रिविधमूर्ति-कीर्तिविस्फूर्जितजगदुदयसंदोहदिनकर इव निजजनमानस-सरोजषट्पदविदितसकलवेदविद्योतमानमानस निजजनमुनि-जनवंदितपदनखनीरपवित्रीकृतगीर्वाणमुनिमानसवंदितचरण-रजःप्रसादसारभूत जगतामधीश नमस्ते नमस्ते ।

अष्टशक्तिसहितो वनमाली
पीतचैलकुसुमावलिशोभः ।
पङ्कजाकरविराजितपादः
पातु मामवहितेन्द्रियवर्गः ॥

भक्तहृत्कमलराजितमूर्ति-
दुष्टदैत्यदलनोत्थितकीर्तिः ।
बद्धसेतुरविताश्रितलोकः
पातु मामनुदिनं भुवनेशः ॥

स्थिरचलत्रिविधतापहिमांशु-
र्भासमानतरणिप्रतिभासः ।
एक एव बहुधा कृतवेषो
माययावतु महामतिरीशः ॥

भक्तचिन्तनकृते कृतरूपः शैशवेन बहुशासितभूपः ।
वेदमार्गं उरुधा हितकारी रीतिरीशितुरियं गुणशाली ॥

यज्ञभुग्घृदयबन्धनधारी विश्वमूर्त्तिरबलांशुकहारी ।
पालनेऽपि महतां बहुदेहो रास एष तनुमानवतान्नः ॥

प्रेमभक्तिपुरुषैरुपलभ्यः पूरुषः कृतसमस्तनिवासः ।
दास्यवृन्दहृषितो निजदासः प्रेक्षणैककरुणोऽवतु विश्वम् ॥

कण्ठलम्बितत रक्षुनखाग्रकृष्टगोपरमणीकुचभारः ।
लीलया युवतिभिः कृतवेषः शेष एव भवतादुपशान्त्यै ॥

दण्डपाणिरयमेव जनानां शासितात्मनियमोक्तहितानाम् ।
पावनाय महतामनुशालो विश्वदुःखशमनो भवतान्नः ॥

( स्क० महापु० वैष्णव० ३।४।१०-१८ )

## २३. ब्रह्माकृता स्तुतिः

(क)—नमस्ते पुरुषाध्यक्ष सर्वभूतगुहाशय ।
वासुदेवाखिलाधार जगद्धेतो जगन्मय ॥

त्वमेव सर्वभूतानां हेतुः पतिरुताश्रयः ।
मायाशक्तिमुपाश्रित्य विचरस्येकसुन्दर ॥

एको नानायते योऽसौ नटवज्जायतेऽव्ययः ।
व्यापकोऽपि कृपालुत्वाद्भक्तहृत्पद्मषट्पदः ॥

**देवाः —**

विपद्घनान्ते हुतभुग्जनानां गृहीतसत्त्वस्त्रिदशावनीशः ।
चराचरात्मा भगवाननन्तः कृपाकटाक्षैरवलोकतां नः ॥

सकृद्यन्नामपीयूषरसपानपरः पुमान् ।
निःश्रेयसं तृणमिव मन्यते तं हरिं भजे ॥

अविद्याप्रतिबिम्बत्वाज्जीवभावमुपागतः ।
विज्ञत्वादुपशान्तात्मा स पुनातु जगत्त्रयम् ॥

**गन्धर्वः —**

पिबन्ति ये हरेः पदाम्बुसङ्गलेशतः
पयः पयो न ते पुनः पुनः पिबन्ति मातुरंकतः ।
प्रसंगतो यदाभिधा सुधां निपीय मानवा
मृताऽमृतं व्रजन्त्यधो न जातु यान्त्यशंकिताः ॥

( स्क० महापु० वैष्णव० ३।५।१४-२० )

(ख)—नमः कमलनाभाय नमस्ते कमलाश्रय।
नमस्ते कमलावास विशालवनमालिने॥

नमो विज्ञानमात्राय गुहावासनिवासिने।
हृषीकेशाय शान्ताय तुभ्यं भगवते नमः॥

स्वभक्तरक्षणकृते धृतदेहाय शार्ङ्गिणे।
अनन्तक्लेशनाशाय गदिने ब्रह्मणे नमः॥

संसारविविधासारनिवृत्तिकृतकर्मणे।
रक्षित्रे सर्वजन्तूनां विष्णवे जिष्णवे नमः॥

नमो विश्वम्भराशेषे निवृत्तगुणवृत्तये।
सुरासुरवरस्तम्भनिवृत्तिस्थितिकीर्त्तये॥

( स्क० महापु० वैष्णव० ३।१५-१९ )

## २४. विष्णुशर्माकृता विष्णुस्तुतिः

प्रसीद भगवन्विष्णो प्रसीद पुरुषोत्तम।
प्रसीद देवदेवेश प्रसीद कमलेक्षण॥

जयकृष्ण जयाचिंत्य जय विष्णो जयाव्यय।
जय यज्ञपते नाथ जय विष्णो पते विभो॥

जय पापहरानन्त जय जन्मज्वरापह।
नमः कमलनाभाय नमः कमलमालिने॥

नमः सर्वेश भूतेश नमः कैटभसूदन।
नमस्त्रैलोक्यनाथाय जगन्मूल जगत्पते॥

नमो देवाधिदेवाय नमो नारायणाय वै।
नमः कृष्णाय रामाय नमश्चक्रायुधाय च॥

त्वं माता सर्वलोकानां त्वमेव जगतः पिता।
भयार्त्तानां सुहृन्मित्रं त्वं पिता त्वं पितामहः॥

त्वं हविस्त्वं वषट्कारस्त्वं प्रभुस्त्वं हुताशनः।
करणं कारणं कर्त्ता त्वमेव परमेश्वर॥
शङ्खचक्रगदापाणे मां समुद्धर माधव।
प्रसीद मन्दरधर प्रसीद मधुसूदन॥
प्रसीद कमलाकान्त प्रसीद भुवनाधिप।

(स्क० महापु० वैष्णव० ८।१।७६-८७)

०

## २५. धर्मकृता स्तुतिः

नमः क्षीराब्धिवासाय नमः पर्यङ्कशायिने।
नमः शङ्करसंस्पृष्टदिव्यपादाय विष्णवे॥
भक्त्यार्चितसुपादाय नमोऽजादिप्रियाय ते।
शुभाङ्गाय सुनेत्राय माधवाय नमो नमः॥
नमोऽरविन्दपात्राय पद्मनाभाय वै नमः।
नमः क्षीराब्धिकल्लोलस्पृष्टमात्राय शार्ङ्गिणे॥
ॐ नमो योगनिद्राय योगक्षैर्भावितात्मने।
ताक्ष्यासनाय देवाय गोविन्दाय नमो नमः॥
सुकेशाय सुनासाय सुललाटाय चक्रिणे।
सुवक्त्राय सुवर्णाय श्रीधराय नमो नमः॥
सुबाहवे नमस्तुभ्यं चारुजङ्घाय ते नमः।
सुवासाय सुदिव्याय सुविधाय गदाभृते॥
केशवाय च शान्ताय वामनाय नमो नमः।
धर्मप्रियाय देवाय नमस्ते पीतवाससे॥

० ० ० ०

तुष्टोऽहं भवतो धर्म स्तोत्रेणानेन सुव्रत।
वरं वरय धर्मज्ञ यस्ते स्यान्मनसः प्रियः॥
स्तोत्रेणानेन यः स्तौति मानवो मामतन्द्रितः।
सर्वान्कामानवाप्नोति पूजितः श्रीयुतः सदा॥

(स्क० महापु० वैष्णव० ८।४।१०-१६)

## २६. देवैः कृता विष्णुस्तुतिः

(क)—संसारार्णवसंतार सुपर्णसुखदायिने ।
मोहतीव्रतमोहारि चन्द्राय हरये नमः ॥
स्फुरत्संविन्मणिशिखां चित्तसंगतिचन्द्रिकाम् ।
प्रपद्ये भगवद्भक्तिमानसोद्यानवाहिनीम् ॥

हेलोल्लसन्समुत्साहशक्ति व्याप्तजगत्त्रयाम् ।
या पूर्वकोटिर्भावानां सत्त्वानां वैष्णवीति वा ॥
पवनान्दोलिताम्भोजदलपर्वान्तवर्तिनाम् ।
पततामिव जन्तूनां स्थैर्यमेका हरिस्मृतिः ॥

नमः सूर्य्यात्मने तुभ्यं संवित्किरणमालिने ।
हृत्कुशेशयकोषश्रीसमुन्मेषविधायिने ॥
नमस्तस्मै यमवते योगिनां गतये सदा ।
परमेशाय वै पारे महसां तमसां तथा ॥

यज्ञाय भुक्तहविष ऋग्यजुःसामरूपिणे ।
नमः सरस्वतीगीतदिव्यसद्गुणशालिने ॥
शान्ताय धर्मनिधये क्षेत्रज्ञायामृतात्मने ।
शिष्ययोगप्रतिष्ठाय नमो जीवैकहेतवे ॥

घोराय मायाविधये सहस्रशिरसे नमः ।
योगनिद्रात्मने नाभिपद्मोद्भूतजगत्सृजे ।
नमः सलिलरूपाय कारणाय जगत्स्थितेः ॥

कार्यमेयाय वलिने जीवाय परमात्मने ।
गोप्त्रे प्राणाय भूतानां नमो विश्वाय वेधसे ॥
दृप्ताय सिंहवपुषे दैत्यसंहारकारिणे ।
वीर्यायानन्तमनसे जगद्भावभृते नमः ॥

संसारकारणाज्ञानमहासंतमसच्छिदे ।
अचिन्त्यधाम्ने गुह्याय रुद्रायात्युद्विजे नमः ॥

शान्ताय शान्तकल्लोलकैवल्यपददायिने ।
सर्वभावातिरिक्ताय नमः सर्वमयात्मने ॥

इन्दीवरदलश्यामं स्फूर्जत्किंजल्कविभ्रमम् ।
बिभ्राणं कौस्तुभं विष्णुं नौमि नेत्ररसायनम् ॥
(स्क० महापु० वैष्णव० ८।६।२४-३७)

(ख)—ॐ नमो भगवते तुभ्यं वासुदेवाय धीमहि ।
प्रद्युम्नायानिरुद्धाय नमः सङ्कर्षणाय च ॥
ॐकारब्रह्मरूपाय त्रेधाविष्कृतमूर्त्तये ।
ब्रह्माण्डसर्गस्थित्यन्तहेतवे निर्गुणाय च ॥
नयनानन्दरूपाय प्रणतक्लेशनाशिने ।
केशवाय नमस्तुभ्यं स्वतन्त्रेश्वरमूर्त्तये ॥
मोदिताशेषभक्ताय कालमायादिमोहिने ।
सदानन्दाय कृष्णाय नमः सद्धर्मवर्त्तिने ॥
भवाम्बुधिनिमग्नानामुद्धृतिक्षमकीर्तये ।
दर्शनीयस्वरूपाय घनश्यामाय ते नमः ॥
गदाब्जदरचक्राणि बिभ्रते दीर्घबाहुभिः ।
सुरगोविप्रधर्माणां गोप्त्रे तुभ्यं नमो नमः ॥
वरेण्याय प्रपन्नानामभीष्टवरदायिने ।
निगमागमवेद्याय वेदगर्भाय ते नमः ॥
तेजोमण्डलमध्यस्थदिव्यसुन्दरमूर्तये ।
नमामो विष्णवे तुभ्यं परात्परतराय च ॥
वाणीमनोविप्रकृष्टमहिम्नेऽक्षररूपिणे ।
सर्वान्तर्यामिणे तुभ्यं बृहते च नमो नमः ॥
सुखदोऽसि त्वमेवैकः स्वाश्रितानामतो वयम् ।
महापदधिकक्लिष्टाः शरणं त्वामुपागताः ॥
देवाधिदेवभक्तस्य तव दुर्वाससो वयम् ।
अतिक्रमाच्छ्रिया हीनाः प्राप्ताः स्मो दुर्दशामिमाम् ॥
वासोन्नपानस्थनादिहीनान्धर्मोऽपि नः प्रभो ।
त्यक्त्वा सहश्रिया यातस्तान्पातुं त्वमसीश्वरः ॥
यतो वयं च धर्मश्च त्वदीया इति विश्रुताः ।
यथापूर्वं सुखीकर्त्तुं त्वमेवार्हस्यतो हि नः ॥
(स्क० महापु० वैष्णव० ९।१०।२२-३४)

(ग)—

ब्रह्मा—विचार्य्याऽहं वेदान्मुहुरुपगतो निश्चयमिमं
रमाराधे भक्तिस्त्वयि दृढतरा यर्ह्यसुभृताम् ।
भवेत्तर्ह्येवेषां क्षयविरहिता भोगनिकरा-
स्तथा स्युर्ल्लोका वै परमपुरुषात्यन्तिकगतिः ॥
अजानन्तस्त्वित्थं भृतरजतमस्कानपि हरे
भजन्त्यस्मान्देवान्बहुविधतपोर्च्चासरंणिभिः ।
त एवोक्ता मूढाः क्षयरहितसौख्यं न कुहचि-
ल्लभन्तेऽतस्त्वां वै निजहृदि दधे केशवमहम् ॥

शङ्करः—

त्रयी सांख्यवेदान्तयोगाः पुराणं
तथा पञ्चरात्रं प्रभो धर्मशास्त्रम् ।
तवैवातिमाहात्म्यमेकस्य नित्यं
प्रकारैरनेकैर्हि गायन्ति भक्त्या ॥
त्वदेवेश शास्त्राणि चैतानि भूम्नो
बभूवुस्त्वदेकाश्रयाण्यादिकल्पे ।
रमासेव्यपादाम्बुजं शास्त्रयोनिं
तमाद्यं भवन्तं भजे वासुदेवम् ॥

धर्मः—

कथा त्वदीया भवपाशमोचनी
सुधैव तापत्रयतप्तदेहिनाम् ।
अनेकजन्माघचयापहारिणी
तनोति भक्तिं वयुनं तवाञ्जसा ॥
सदैव सा कर्णपथेन हृद्दरीं
विशत्वनन्ताभिधसम्मुखोद्गता ।
मम त्वदन्या हरताच्च वासना
दयाब्धये ते प्रभविष्णवे नमः ॥

**प्रजापतिः—**

धन्या एते कल्पवृक्षा यदीयां
छायामेतामाश्रितस्त्वं सहश्रीः ।
धन्यः कर्त्ता मण्डपस्यास्य ते वै
धन्यैषा भूर्यत्र पीठं तवेश ॥
धन्यो लोके नूनमेषोऽम्बुराशिः
साक्षात्तुभ्यं येन दत्ता स्वकन्या ।
धन्याश्चैते त्वां वयं वीक्षमाणा
धन्येशानं श्रीपतिं त्वां नताः स्मः ॥

**मनवः—**

धर्मः खलु स हि परमो धर्मेभ्यो माधव सकलेभ्योऽपि ।
भक्तिर्भवति यतो वै धर्मभुवि त्वयि हि निरवद्या ॥
धर्मात्मानं भगवन्धर्मधुरीणं च धर्मपातारम् ।
सर्वातिप्रियधर्मं नुमस्त्वां धर्मसंभूतिम् ॥

**ऋषयः—**

भक्त्या हीनस्त्वद्विमुखो वयुनार्थी
श्राम्यन्भूयोऽप्यस्य न सिद्धिं समुपैति ।
तर्ह्यासक्तः कर्मणि काम्ये तु कुतोऽसौ
सौख्यं यायादक्षयमानन्दमहाब्धे ॥
भक्त्या नित्यं त्वामत एव वयं वै
श्रद्धायुक्ता धर्मतपो निगमाद्यैः ॥
मायातीतं कालनियन्तारमुदारं
ध्यायामः श्रीकान्तपरात्परमेकम् ॥

**इन्द्रः—**

भगवन्नुरुदुःखिता वयं ननु दुर्वाससः एव हेळनात् ।
न भवन्तमृतेऽवितुं हि नो विधिरुद्रप्रमुखा इमेऽशकन् ॥
विगताखिलसम्पदो निरन्नाः समभावं भुवि पामरैरुपेताः ।
भवतैव वयं हृतापदः स्मः सपदि श्रीहरये नमोऽस्तु तुभ्यम् ॥

अग्निः—

गीर्वाणदानवनराद्युपजीवनान्नं
यन्निर्मितं हि भवतैव ततो बुधास्तु ।
यज्ञेषु तेन यजनं तव कुर्वतेऽथो
त्वच्छेषमन्यदिविषद्भ्य उपानयन्ति ॥
काम्येषु कर्मसु रता अपि याज्ञिकास्ते
तत्कर्मबन्धनत आशु विमुच्य यान्ति ।
ब्राह्मीं गतिं तदितरे तु भवन्ति चौराः
श्रीयज्ञपूरुषमहं प्रणमामि तं त्वाम् ॥

मरुद्गणाः—

भक्ता एकान्तिकास्तेऽक्षरपरमपदे सेवया ते तु हीनं
वासैश्वर्यादि नेच्छन्त्यतिशयितसुखं नापि कैवल्यमोक्षम् ।
तद्युक्तं त्वात्मनोऽपि श्वपचकुलजनुर्मानयन्त्युत्तमं वै
तं त्वामेकान्तधर्माश्रयणमुपगताः श्रीमहापूरुषं स्मः ॥

सिद्धाः—

नैकब्रह्माण्डसर्गादिकारणं त्वामकारणम् ।
तत्स्थं तद्व्यतिरिक्तं च नियन्तारं नमामहे ॥

रुद्राः—

मायायाः सर्वमोहिन्या मोहनं मोहवर्जितम् ।
महाकालस्यापि कालं त्वां नमः पुरुषोत्तमम् ॥

आदित्याः—

प्रकाशिता येन वयं जगन्ति
प्रकाशयामो भवता रमेश ।
स्वयंप्रकाशं तमुरुप्रकाशं
प्रकाशमूर्तिं प्रणता भवन्तम् ॥

साध्याः—

शास्ता नृपाणां च महोरगाणां
दैत्याधिपानां च सुराधिपानाम् ।
त्वं वै मनूनां च प्रजापतीनां
राजाधिराजाय नमोऽस्तु तुभ्यम् ॥

**वसवः—**

भवति भुवि यदा यदाऽसुरांशैः
प्रथितसनातनधर्मधार्मिकाणाम् ।
कदनमुरु तदा तदा स्वयं ते
ह्यवतरते प्रणमाम धर्मगोप्त्रे ॥

**चारणाः—**

चरित्रं शुभं ते धृतानेकमूर्त्तेः
प्रबन्धैरनेकैर्हि गायन्ति भक्ताः ।
यदु श्रोतृवक्तॄन्पुनात्येव सद्यो
वयं त्वां नताः पुण्यकीर्त्तिं भवन्तम् ॥

**गन्धर्वाप्सरसः—**

ये कथास्ते विहायान्यगाथाः प्रभो
कीर्त्तयन्तेऽथ शृण्वन्ति वा ते जनाः ।
दुःखिता स्युश्च संसारपाशैः सितास्तं
नताः स्म शरण्यं भवन्तं वयम् ॥

**समुद्रः —**

अजितं तवाऽथ तावकजनस्य मुदामल्पमपि
द्रविणजलान्नवस्त्रनमनान्यतमेन सकृत् ।
चरति ह सेवनं स पदवीं महतीं महतां
व्रजति जनोल्पकोऽपि तमहं प्रणतः करुणम् ॥

**पार्षदाः—**

पितरौ त्वमसि स्वजनस्त्वमसि
त्वमसीष्टगुरुः सुहृदात्मपतिः ।
त्वमसीश्वर एव च नः परम-
स्त्वमसि द्रविणं सकलं त्वमसि ॥

**मूर्त्तिः—**

यत्सम्बन्धत एव यान्ति पदवीमुच्चां
स्त्रीशूद्रासुरनीचपक्षिपशवः पापात्मजीवा अपि ।
यद्धीना विबुधेश्वरा अपि भवन्त्यचर्चोज्झितास्तत्क्षणं
गोलोकाधिपतिं तमेव हृदये नित्यं भजे त्वामहम् ॥

**सावित्री—**

त्वं सर्गकाले प्रकृतिं च पूरुषं
दृष्ट्वा स्वयोत्थाप्य ततस्तदात्मना।
तत्त्वानि सृष्ट्वा महदादिमानि तै-
र्नैकान्विराजो बहुधा ससर्जिथ॥
वैराजरूपेण जगद्विधातृतां
स्वीकृत्य देवासुरमानुषोरगान्।
त्वं स्थावरं जङ्गममीश निर्ममे
त्वामादिकर्त्तारमुपाश्रितास्म्यहम्॥

**दुर्गा—**

प्रियतयाऽधिकया हृदि चिन्तनं
विदधते तव ये भुवि ते विभो।
न परमेष्ठिसुखं न दिवः सुखं
न कमयन्ति धरैकनरेशताम्॥

प्रसभमर्पितमप्यतुलं त्वया
सुखमिदं समवाप्य च तत्र ते।
तदपहाय न शक्तिकृतक्षणं
तमु नमामि च सात्वतनायकम्॥

**नद्यः—**

वरद नमनमात्रं नामसंकीर्त्तनं वा
विदधति तव ये वै ज्ञानतोऽज्ञानतो वा।
जनिमृतियमभीतेस्तानपि त्रायमाणं
नरसखमुपयाताः स्योऽद्य नारायणं त्वाम्॥

**देवपत्न्यः—**

भुवि धृताकृतेर्जन्म मङ्गलं
चरितमद्भुतं लोकपावनम्।
भवति निर्गुणं सर्वमेव ते
भवसि निर्गुणं ब्रह्म यत्परम्॥

तव समाश्रयात्तामसा जना
अपि च राजसाः सात्त्विकाश्च ये।
ननु भवन्ति ते निर्गुणास्ततो
वयमुपास्महे त्वां हि निर्गुणम्॥

**ऋषिपत्न्यः—**

आर्तानामुरुवृजिनैस्त्रिधा च तापैः
सर्वापत्प्रशमनमेकमेव विष्णोः ॥
पादाब्जं तव भवतीति तद्वयं वै
प्राप्ताः स्मः शरणमनन्त देवदेव ॥

**पृथिवी—**

पूर्णशारदसुधाकराननं
शारदाब्जदलदीर्घलोचनम् ।
श्रीवियोगबहुधार्तिमोचनं
वासुदेवमहमेकमाश्रये ॥

**सरस्वती—**

नयने ममाच्युत तवातिसुन्दरे
मुखशीतरोचिषि चकोरतां गते ।
न हि गच्छतोऽन्यत इतीयमेव मे
हृदि मूर्त्तिरस्तु सततं न हीतरा ॥

( स्क० महापु० वैष्णव० ६।१५।१-३७)

## २७. नारदकृता स्तुतिः

(क)—जय श्रीकृष्ण भगवन्नारायण जगत्प्रभो ।
वासुदेवाऽखिलावास सदैकान्तिकवल्लभ ॥
अत्याश्चर्यार्चनीयाङ्घ्रे राधिकाकमलादिभिः ।
त्वमेवात्यन्तिकं श्रेयोऽभीप्सतां परमा गतिः ॥
नित्यानामात्मनां नित्य आत्मा चेतनचेतनः ।
क्षराक्षरेभ्यश्च परस्त्वं ब्रह्म परमं हरे ॥
यथा विशुद्धिः सिद्धिश्च भक्त्या परमया तव ।
तथा न स्यान्नृणामन्यैः साधनैस्तप आदिभिः ॥
त्वदङ्घ्रिदिव्यज्योत्स्नैका मुमुक्षूणां हृदि स्थितम् ।
महत्सन्तमसं हर्त्तुं सद्यः शक्तास्ति सत्पते ॥
सर्वैर्वेदैस्त्वमेवेज्य उपास्यो ज्ञेय एव च ।
निरूपितोऽसि भगवन्सर्वकारणकारणम् ॥

एकैकस्मिन्रोमकूपे यत्तवास्ति सितं महः ।
शान्तमानन्दरूपं च तत्कोटीन्दुप्रभाधिकम् ॥
अस्मिंत्वमक्षरे धाम्नि निर्गुणेऽमृतसञ्ज्ञके ।
महःपुञ्जे सदैवास्से निर्गुणः पुरुषोत्तमः ॥
ब्रह्माण्डभयदात्कालान्मायायाश्च महाभयात् ।
मुक्ता भक्ता भवन्त्येव त्वदीयोपासनाबलात् ॥
तं त्वामहमुपेतोऽस्मि शरणं जगदीश्वरम् ।
सर्वात्मानं विभुं ब्रह्म महापुरुषमच्युतम् ॥
यथा त्वच्चरणाम्भोजे भक्तिर्मे निश्चला सदा ।
भवेत्तथैव देवेश कर्त्तुमर्हस्यनुग्रहम् ॥

(स्क० महापु० वैष्णव० ९।१८।२७-३७)

(ख)—नमो नमस्ते भगवञ्जगद्गुरो
नारायणाप्राकृतदिव्यमूर्त्ते ।
अनन्तकल्याणगुणाकरस्त्वं
दासे मयि प्रीततरः सदा स्याः ॥
त्वं वासुदेवोऽसि जगन्निवासः
क्षेमाय लोकस्य तपःकरोऽपि ।
योगेश्वरेशोपशमस्थ आत्मा
रामाधिपस्त्वं परहंससद्गुरुः ॥
विभुर्ऋषीणामृषभोऽक्षरात्मा
जीवेश्वराणां च नियामकोऽसि ।
साक्षी महापूरुष आत्मतन्त्रः
कालोऽभवद्यद्भ्रुकुटेर्महांश्च ॥
सर्गादिलीलां जगतां त्वमीश
करोषि मायापुरुषात्मनैव ।
तथाप्यकर्त्ता ननु निर्गुणोऽसि
भूमा परब्रह्म परात्परश्च ॥
सत्यः स्वयंज्योतिरतर्क्यशक्ति-
स्त्वं ब्रह्मभूतात्मविचिन्त्यमूर्तिः ।
बृहद्व्रताचार्य महामुनीन्द्र
कन्दर्पदर्पापहरप्रताप ॥
तपस्विनां ये रिपवः प्रसिद्धाः
क्रोधो रसो मत्सरलोभमुख्याः ।
अप्याश्रमं तेऽपि कदापि वेष्टुं
नेमं क्षमा ह्येष तव प्रतापः ॥

छन्दोमयो ज्ञानमयोऽमृताध्वा
धर्मात्मको धर्मसर्गाभिपोष्टा ।
उन्मूलिताधर्मसर्गो महात्मा
त्वमव्ययश्चाक्षयोऽव्यक्तबन्धुः ॥
निर्दोषरूपस्य तवाऽखिला: क्रिया
भवन्ति वै निर्गुणा निर्गुणस्य ।
धर्मार्थकामेप्सुभिरर्चनीय-
स्त्वमीश्वरो नाथ मुमुक्षुभिश्च ॥
त्वं कालमायायमसंसृतिभ्यो
महाभयात्पातुमेक: समर्थः ।
भक्तापराधाननवेक्षमाणो
महादयालुः किल भक्तवत्सलः ॥
धृतावतारस्य हि नाममात्रं
रूपं च वा यः स्मरेदन्तकाले ।
सोऽपि प्रभो घोरमहाघसंघा-
त्सद्यो विमुक्तो दिवमाशु याति ॥
तं त्वां विहायाऽत्र तु यो मनुष्यो
देहे त्रिधातावपि दैहिकेषु ।
जायात्मजज्ञातिधनेषु सज्जते
स मायया वञ्चित एव मूढः ॥
त्वद्भक्तियोग्यो नरदेह एव
यं कामयन्तेऽपि च नाकसंस्था: ।
त्वद्भक्तिहीनं हि दिवोऽपि सौख्य-
महं तु जाने नरकेण तुल्यम् ॥
तपस्त्रिलोक्याः कुरुषे सुखाय
तत्रापि ते भारतवासिपुंसु ।
अनुग्रहो भूरितरो यदत्र
कृतावतारो विचरन्विराजसे ॥
तस्याश्रयं ये तव नाथ कुर्वते
त एव शास्त्रेषु मताः कृतघ्नाः ।
अतस्तवैकाश्रयमेव बाढं
कुर्वंत्यजस्रं मयि तेऽस्तु तुष्टिः ॥

( स्क० महापु० वैष्णव० ६।३१।१०-२३ )

## २८. गालवकृता स्तुतिः

(क)—नमो देवादिदेवाय शङ्खचक्रगदाभृते।
नमो नित्याय शुद्धाय सच्चिदानन्दरूपिणे॥

नमो भक्तार्तिहन्त्रे ते हव्यकव्यस्वरूपिणे।
नमस्त्रिमूर्तये तुभ्यं सृष्टिस्थित्यन्तकारिणे॥

नमः परेशाय नमो विभूम्ने
नमोऽस्तु लक्ष्मीपतये विधात्रे।
नमोऽस्तु सूर्येन्दुविलोचनाय
नमो विरिंच्याद्यभिवन्दिताय॥

यो नामजात्यादिविकल्पहीनः
समस्तदोषैरपि वर्जितो यः।
समस्तसंसारभयापहारिणे
तस्मै नमो दैत्यविनाशनाय॥

वेदान्तवेद्याय रमेश्वराय
वैकुण्ठवासाय विधातृपित्रे।
नमो नमः सत्यजनार्तिहारिणे
नारायणायामितविक्रमाय॥

नमस्तुभ्यं भगवते वासुदेवाय शार्ङ्गिणे।
भूयो भूयो नमस्तुभ्यं शेषपर्यङ्कशायिने॥

× × ×

नारायण रमानाथ पीताम्बर जगन्मय।
जनार्दन जगद्धामन्गोविन्द नरकान्तक॥
त्वद्दर्शनात्कृतार्थोऽसि सर्वस्मादधिकस्तथा।
त्वां न पश्यन्त्यधर्मिष्ठा यतस्त्वं धर्मपालकः॥
यन्न वेत्ति भवो ब्रह्मा यन्न वेत्ति त्रयी तथा।
तं वेद्मि परमात्मानं किमस्मादधिकं वरम्॥
योगिनो यं न पश्यन्ति यं न पश्यन्ति कर्मठाः।
तं पश्यामि परात्मानं किमस्मादधिकं वरम्॥

एतेन च कृतार्थोऽस्मि जनार्दन जगत्पते ।
यन्नामस्मृतिमात्रेण महापातकिनोऽपि च ॥
मुक्तिं प्रयान्ति मुनयस्तं पश्यामि जनार्दनम् ।
त्वत्पादपद्मयुगले निश्चला भक्तिरस्तु मे ॥
( स्क० महापु० ब्राह्म० १।३।३१-४५ )

(ख)—सहस्रशिरसं विष्णुं मत्स्यरूपधरं हरिम् ।
नमस्यामि हृषीकेशं कूर्मवाराहरूपिणम् ॥
नारसिंहं वामनाख्यं जामदग्न्यं च राघवम् ।
बलभद्रं च कृष्णं च कल्किं विष्णुं नमाम्यहम् ॥
वासुदेवमनाधारं प्रणतार्तिविनाशनम् ।
आधारं सर्वभूतनां प्रणमामि जनार्दनम् ॥
सर्वज्ञं सर्वकर्तारं सच्चिदानन्दविग्रहम् ।
अप्रतर्क्यमनिर्देश्यं प्रणतोऽस्मि जनार्दनम् ॥

× × ×

परेश परमानन्द शरणागतपालक ।
त्राहि मां करुणासिन्धो रक्षोवशमुपागतम् ॥
लक्ष्मीकान्त हरे विष्णो वैकुण्ठ गरुडध्वज ।
मां रक्ष रक्षसाक्रान्तं ग्राहाक्रान्तं गजं यथा ॥
दामोदर जगन्नाथ हिरण्यासुरमर्दन ।
प्रह्लादमिव मां रक्ष राक्षसेनातिपीडितम् ॥
( स्क० महापु० ब्राह्म० १।३।८१-९१ )

## २९. पुण्यनिधिकृता स्तुतिः

नमस्ते कमलाकान्त प्रसीद गरुडध्वज ।
शार्ङ्गपाणे नमस्तुभ्यमपराधं क्षमस्व मे ।
नमस्ते पुण्डरीकाक्ष चक्रपाणे प्रियः पते ॥
कौस्तुभालङ्कृताकाय नमः श्रीवत्सलक्ष्मणे ।
नमस्ते ब्रह्मपुत्राय दैत्यसंघविदारिणे ॥
अशेषभुवनावासनाभिपङ्कजशालिने ।
मधुकैटभसंहर्त्रे रावणान्तकराय ते ॥

प्रह्लादरक्षिणे तुभ्यं धरित्रीपतये नमः ।
निर्गुणायाप्रमेयाय विष्णवे बुद्धिसाक्षिणे ॥
नमस्ते श्रीनिवासाय जगद्धात्रे परात्मने ।
नारायणाय देवाय कृष्णाय मधुविद्विषे ॥
नमः पङ्कजनाभाय नमः पङ्कजचक्षुषे ।
नमः पङ्कजहस्तायाः पतये पङ्कजाङ्घ्रये ॥
भूयो भूयो जगन्नाथ नमः पङ्कजमालिने ।
दयामूर्त्ते नमस्तुभ्यमपराधं क्षमस्व मे ॥
मया निगडपाशाभ्यां यः कृतो मधुसूदन ।
अनयस्त्वत्स्वरूपमविदित्वा कृतः प्रभो ॥
अतो मदपराधोऽयं क्षन्तव्यो मधुसूदन ॥
( स्क० महापु० ब्राह्म० १।५०।५१-६८ )

## ३०. देवैः कृता स्तुतिः

नमस्तेऽस्तु जगद्बीज नमस्ते कमलापते ।
नमस्तेऽस्तु सुरेशान नमस्ते कमलेक्षण ॥
त्वं स्थितिः सर्वभूतानां त्वमेव शरणं सताम् ।
त्वं हन्ता सर्वदुष्टानां हयग्रीव नमोऽस्तु ते ॥
त्वमोङ्कारो वषट्कारः स्वाहा स्वधा चतुर्विधा ।
आद्यस्त्वं च सुरेशान त्वमेव शरणं सदा ॥
यज्ञो यज्ञपतिर्यज्वा द्रव्यं होता हुतस्तथा ।
त्वदर्थं हूयते देव त्वमेव शरणं सखा ॥
कालः करालरूपस्त्वं त्वं वार्कः शीतदीधितिः ।
त्वमग्निर्वरुणश्चैव त्वं च कालक्षयङ्करः ॥
गुणत्रयं त्वमेवेह गुणहीनस्त्वमेव हि ।
गुणानामालयस्त्वं च गोप्ता सर्वेषु जन्तुषु ॥
स्त्रीपुंसोश्च द्विधा त्वं च पशुपक्षादिमानवैः ।
चतुर्विधकुलं त्वं हि चतुराशीतिलक्षणः ॥
दिनान्तश्चैव पक्षान्तो मसान्तो हायनं युगम् ।
कल्पान्तश्च महान्तश्च कालान्तस्त्वं च वै हरे ॥
एवंविधैर्महादिव्यैः स्तूयमानः सुरैर्नृप ।
संतुष्टः प्राह सर्वेषां देवानां पुरतः प्रभुः ॥
( स्क० महापु० ब्राह्म० २।१५।११-१८ )

## ३१. ध्रुवकृता भगवत्स्तुतिः

नमो हिरण्यगर्भाय सर्वसृष्टिविधायिने।
हिरण्यरेतसे तुभ्यं सुहिरण्यप्रदायिने॥

नमो हरस्वरूपाय भूतसंहारकारिणे।
महाभूतात्मभूताय भूतानां पतये नमः॥

नमः स्थितिकृते तुभ्यं विष्णवे प्रभविष्णवे।
तृष्णाहराय कृष्णाय महाभारसहिष्णवे॥

नमो दैत्यमहारण्यदाववह्निस्वरूपिणे।
दैत्यद्रुमकुठाराय नमस्ते शार्ङ्गपाणये॥

नमः कौमोदकीव्यग्रकराग्राय गदाधर।
महादनुजनाशाय नमो नन्दकधारिणे॥

नमः श्रीपतये तुभ्यं नमश्चक्रधराय च।
धराधराय वाराहरूपिणे परमात्मने॥

नमः कमलहस्ताय कमलावल्लभाय ते।
नमो मत्स्यादिरूपाय नमः कौस्तुभवक्षसे॥

नमो वेदान्तवेद्याय नमः श्रीवत्सधारिणे।
नमो गुणस्वरूपाय गुणिने गुणवर्जिते॥

नमस्ते पद्मनाभाय पाञ्चजन्यधराय च।
वासुदेव! नमस्तुभ्यं देवकीनन्दनाय च॥

प्रद्युम्नाय नमस्तुभ्यमनिरुद्धाय ते नमः।
नमः कंसविनाशाय नमश्चाणूरमर्दिने॥

दामोदरहृषीकेश गोविन्दाच्युतमाधव।
उपेन्द्रकैटभाराते मधुहन्त रधोक्षज!॥

नारायणाय नरकं हारिणे पापहारिणे।
वामनाय नमस्तुभ्यं हरये शौरये नमः॥

अनन्ताय नमस्तुभ्यमनन्तशयनाय च।
रुक्मिणीपतये तुभ्यं रुक्मिप्रमथनाय च॥

चैद्यहन्त्रे नमस्तुभ्यं दानवारे सुरारये।
मुकुन्दपरमानन्दनन्दगोपप्रियाय च॥

नमस्ते पुण्डरीकाक्ष दनुजेन्द्रनिषूदन।
नमो गोपालरूपाय वेणुवादनकारिणे॥

गोपीप्रियाय केशिघ्ने गोवर्धनधराय च ।
रामाय रघुनाथाय राघवाय नमो नमः ॥

रावणारे नमस्तुभ्यं विभीषणशरण्यद ।
अजाय जयरूपाय रणाङ्गणविचक्षण ॥

क्षणादिकालरूपाय नानारूपाय शार्ङ्गिणे ।
गदिने चक्रिणे तुभ्यं दैत्यचक्रविमर्दिने ॥

बलाय बलभद्राय बलारातिप्रियाय च ।
बलियज्ञप्रथमन नमो भक्तवरप्रद ॥

हिरण्यकशिपोर्वक्षोविदारणप्रिय ।
नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ॥
नमस्ते धर्मरूपाय नमः सत्त्वगुणाय च ।
नमः सहस्रशिरसे पुरुषाय पराय च ॥

सहस्राक्ष सहस्राङ्घ्रे सहस्रकिरणाय च ।
सहस्रमूर्ते श्रीकान्त नमस्ते यज्ञपूरुष ! ॥

वेदवेद्यस्वरूपाय नमो वेदप्रियाय च ।
वेदाय वेदगदिने सदाचाराध्वगामिने ॥

वैकुण्ठाय नमस्तुभ्यं नमो वैकुण्ठवासिने ।
विष्टरश्रवसे तुभ्यं नमो गरुडगामिने ॥

विष्वक्सेन नमस्तुभ्यं जगन्मय जनार्दन ।
त्रिविक्रमाय सत्याय नमः सत्यप्रियाय च ॥

केशवाय नमस्तुभ्यं मायिने ब्रह्मगायिने ।
तपोरूपाय तपसां नमस्ते फलदायिने ॥
स्तुत्याय स्तुतिरूपाय भक्तस्तुतिरताय च ।
नमस्ते श्रुतिरूपाय श्रुत्याचारप्रियाय च ॥

अण्डजाय नमस्तुभ्यं स्वेदजाय नमोऽस्तु ते ।
जरायुजस्वरूपाय नम उद्भिज्जरूपिणे ॥

देवानामिन्द्ररूपोऽसि ग्रहाणामसि भानुमान् ।
लोकानां सत्यलोकोऽसि सिन्धूनां क्षीरसागरः ॥
सुरापगाऽसि सरितां सरसां मानसं सरः ।
हिमवानसि शैलानां धेनूनां कामधुग्भवान् ॥
धातूनां हाटकमसि स्फटिकश्चोपलेष्वसि ।
नीलोत्पलं प्रसूनेषु वृक्षेषु तुलसी भवान् ॥

सर्वपूज्यशिलानां वै शालग्रामशिला भवान् ।
मुक्तिक्षेत्रेषु काशी त्वं प्रयागस्तीर्थपङ्क्तिषु ॥
वर्णेषु श्वेतवर्णोऽसि द्विपदां ब्राह्मणो भवान् ।
गरुडोऽस्यण्डजेष्वीश व्यवहारेषु वाग्भवान् ॥
वेदेषूपनिषद्रूपो मन्त्राणां प्रणवो ह्यसि ।
अक्षराणामकारोसि यज्वनां सोमरूपधृक् ॥
प्रतापिनामग्निरसि क्षमाऽसि त्वं क्षमावताम् ।
दातॄणामसि पर्जन्यः पवित्राणां परो ह्यसि ॥
चापोऽसि सर्वशस्त्राणां वातो वेगवतामसि ।
मनोऽसीन्द्रियवर्गेषु निर्भयाणां करो ह्यसि ॥
व्योम व्याप्तिमतां त्वं वै परमात्माऽसि चात्मनाम् ।
सन्ध्योपास्तिर्भवान् देव सर्वनित्येषु कर्मसु ॥
क्रतूनामश्वमेधोऽसि दानानामभयं भवान् ।
लाभानां पुत्रलाभोऽसि वसन्तस्त्वमृतुष्वहो ॥
युगानां प्रथमोऽसि त्वं तिथीनां त्वं कुहू ह्यसि ।
पुष्योऽसि नक्षत्रगणे सक्रमः सर्वपर्वसु ॥
योगेषु व्यतिपातस्त्वं तृणेषु हि कुशो भवान् ।
उद्यमानां हि सर्वेषां निर्वाणं त्वमसि प्रभो ॥
सर्वासामिह बुद्धीनां धर्मबुद्धिर्भवानज ।
अश्वत्थः सर्ववृक्षेषु सोमवल्लीलतासु च ॥
प्राणायामोऽसि सर्वेषु साधनेषु शुचिष्वहो ।
सर्वदः सर्वलिङ्गेषु श्रीमान्विश्वेश्वरो भवान् ॥
मित्राणां हि कलत्रं त्वं धर्मस्त्वं सर्वबन्धुषु ।
त्वत्तो नान्यज्जगत्यस्मिन्नारायण चराचरे ॥
त्वमेव माता त्वं तातस्त्वं सुहृत्त्वं महाधनम् ।
त्वमेव सौख्यसम्पत्तिस्त्वमायुर्जीवनेश्वरः ॥
सा कथा यत्र ते नाम तन्मनो यत्त्वदर्पितम् ।
तत्कर्म यत्त्वदर्थं वै तत्तपो यद्भवत्स्मृतिः ॥
तद्धनं धनिनां शुद्धं यत्त्वदर्थे व्ययीकृतम् ।
स एव सकलः कालो यस्मिञ्जिष्णो त्वमर्च्यसे ॥
तावच्च जीवितं श्रेयो यावत्त्वं हृदि वर्तसे ।
रोगाः प्रशममायान्ति त्वत्पादोदकसेवनात् ॥

अहो पुंसां महामोहस्त्वहो पुंसां प्रमादता।
वासुदेवमनादृत्य यदन्यत्र कृतश्रमाः ॥

इदमेव हि माङ्गल्यमिदमेव धनार्जनम्।
जीवितस्य फलं चैतद्दामोदरकीर्तनम् ॥

अधोक्षजात्परो धर्मानार्थो नारायणात्परः।
न कामः केशवादन्यो नापवर्गो हरिं विना ॥

इयमेव पराहानिरुपसर्गायमेव हि।
अभाग्यं परमं चैतद्वासुदेवं न यत्स्मरेत् ॥

हरेराराधनं पुंसां किं किं न कुरुते बत।
पुत्रमित्रकलत्रार्थराज्यस्वर्गापवर्गदम् ॥

हरत्यघं ध्वंसयति व्याधीनाधीन्नियच्छति।
धर्मं विवर्धयेत्क्षिप्तं प्रयच्छति मनोरथम् ॥

भगवच्चरणद्वन्द्वनिर्द्वन्द्वध्यानमुत्तमम्।
पापिनापि प्रसङ्गेन विहितं स्वहितं परम् ॥

पापिनां यानि पापानि महोपपदभाञ्ज्यपि।
सुलीनध्यानसम्पन्नो नामोच्चारो हरेर्हरेत् ॥

प्रमादादपि संस्पृष्टो यथाऽनलकणो दहेत्।
तथोष्ठपुटसंस्पृष्टं हरिनामहरेदघम् ॥

नितान्तं कमलाकान्ते शान्तं चित्तं विधाय यः।
संशीलयेत्क्षणं नूनं कमला तत्र निश्चला ॥

अयमेव परो धर्मस्त्विदमेव परन्तपः।
इदमेव परं तीर्थं विष्णुपादाम्बु यत्पिबेत् ॥

तवोपहारं भक्त्या यः सेवते यज्ञपूरुष।
सेवितस्तेन नियतं पुरोडाशो महाधिया ॥
स चैवावभृथस्नानः स च गङ्गाजलाप्लुतः।
विष्णुपादोदकं कृत्वा शङ्खे यः स्नाति मानवः ॥

शालग्रामशिला येन पूजिता तुलसीदलैः।
स पारिजातमालाभिः पूज्यते सुरसद्मनि ॥

ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा यदि वेतरः।
विष्णुभक्तिसमायुक्तो ज्ञेयः सर्वोत्तमश्च सः ॥

शङ्खचक्राङ्किततनुः शिरसा मञ्जरीधरः।
गोपीचन्दनलिप्ताङ्गो दृष्टश्चेत्तदघं कुतः ॥

प्रत्यहं द्वादशशिलाः शालग्रामस्य योऽर्चयेत् ।
द्वारवत्याः शिलायुक्ताः स वैकुण्ठे महीयते ॥

तुलसी यस्य भवने प्रत्यहं परिपूज्यते ।
तद्गृहं नोपसर्पन्ति कदाचिद्यमकिंकराः ॥

हरिनामाक्षरमुखं भाले गोपीमृदाङ्कितम् ।
तुलसीमालितोरस्कं स्पृशेयुर्न यमानुगाः ॥

गोपीमृत्तुलसीशङ्खशालग्रामः सचक्रकः ।
गृहेऽपि यस्य पञ्चैते तस्यपापभयं कुतः ॥

ये मुहूर्त्ताः क्षणा ये च याः काष्ठा ये निमेषकाः ।
ऋते विष्णुस्मृतेर्यातास्तेषु मुष्टो यमेन सः ॥

क्व द्व्यक्षरं हरेर्नाम स्फुलिङ्गसदृशं ज्वलत् ।
महतीपातकानाञ्च राशिस्तूलोपमा क्व च ॥

गोविन्दं परमात्मानं मुकुन्दं मधुसूदनम् ।
त्यक्त्वाऽन्यं नैव जानामि न भजामि स्मरामि न ॥

न नमामि न च स्तौमि न पश्यामीह चक्षुषा ।
न स्पृशामि न वायामि गायामि न हरिं विना ॥

जले स्थले च पातालेऽप्यनिले चानलेऽचले ।
विद्याधरासुरसुरे किन्नरे वानरे नरे ॥

तृणे स्त्रैणे च पाषाणे तरुगुल्मलतासु च ।
सर्वत्र श्यामलतनुं वीक्षे श्रीवत्सवक्षसम् ॥

सर्वेषां हृदयावासः साक्षात्साक्षीत्वमेव हि ।
बहिरन्तर्विना त्वां तु न ह्यन्यं वेद्मि सर्वगम् ॥

श्रीभगवानुवाच—

अयि बालविशालाक्ष ध्रुव ध्रुवमतेऽनघ ।
परिज्ञातो मया सम्यक्तव हृत्स्थो मनोरथः ॥

अन्नाद्भवन्ति भूतानि वृष्टेरन्नसमुद्भवः ।
तद्वृष्टेः कारणं सूर्यः सूर्याधारो ध्रुवैधि भोः ॥

ज्योतिश्चक्रस्य सर्वस्य ग्रहर्क्षादिः समन्ततः ।
गगने भ्रमतो नित्यं त्वमाधारो भविष्यसि ॥

मेढीभूतस्तु वै सर्वान्वायुपाशैर्नियन्त्रितान् ।
आकल्पं तत्पदं तिष्ठ भ्रामयञ्ज्योतिषाङ्गणान् ॥

आराध्य श्रीमहादेवपुरापदमिदं मया ।
आसादियत्तदेतत्ते तपसा प्रतिपादितम् ॥
केचिच्चतुर्युगं यावत्केचिन्मन्वन्तरं ध्रुव ।
तिष्ठन्ति त्वन्तु वैकल्पं पदमेतत्प्रशास्यंति ॥
मनुनापि न यत्प्रापि किमन्यैर्मानवैर्ध्रुव ।
तत्पदं विहितं त्वत्साच्छक्राद्यैरपि दुर्लभम् ॥
अन्यान्वरान्प्रयच्छामि स्तवेनानेन तोषितः ।
सुनीतिरपि ते माता त्वत्समीपे चरिष्यति ॥
इदं स्तोत्रवरं यस्तु पठिष्यति समाहितः ।
त्रिसन्ध्यं मनुजस्तस्य पापं यास्यति संक्षयम् ॥
न तस्य सदनं लक्ष्मीः परित्यक्षत्यसंशयम् ।
न जनन्या वियोगश्च न बन्धुकलहोदयः ॥
ध्रुवस्तुतिरियं पुण्या महापातकनाशिनी ।
ब्रह्महाऽपि विशुद्ध्येत का कथेतरपापिनाम् ॥
महापुण्यस्य जननी महासम्पत्तिदायिनी ।
महोपसर्गशमनी महाव्याधिविनाशिनी ॥
यस्यास्ति परमा भक्तिर्मयि निर्मलचेतसः ।
ध्रुवस्तुतिरियं तेन जप्या मत्प्रीतिकारिणी ॥
समस्ततीर्थस्नानेन यत्फलं लभते नरः ।
तत्फलं सम्यगाप्नोति जपन् स्तुत्यानया मुदा ॥
सन्ति स्तोत्राण्यनेकानि मम प्रीतिकराणि च ।
ध्रुवस्तुतेर्न चैतस्याः कलामर्हन्ति षोडशीम् ॥
श्रुत्वापीमां स्तुतिं मर्त्यः श्रद्धया परया मुदा ।
पातकैर्मुच्यते सद्यो महत्पुण्यमवाप्नुयात् ॥
अपुत्रः पुत्रमाप्नोति निर्धनो धनमाप्नुयात् ।
अभक्तो भक्तिमाप्नोति कीर्तनाच्च ध्रुवस्तुतेः ॥
दत्त्वा दानान्यनेकानि कृत्वा नाना व्रतानि च ।
यथा लाभानवाप्नोति तथा स्तुत्याऽनया नरः ॥
त्यक्त्वा सर्वाणि कार्याणि त्यक्त्वा जप्यान्यनेकशः ।
ध्रुवस्तुतिरियं जप्या सर्वकामप्रदायिनी ॥

( स्क० महापु० काशी० २१।१-९५ )

## ३२. अग्निबिन्दुकृता स्तुतिः

नमः पुण्डरीकाक्ष बाह्यान्तःशौचदायिने ।
सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात् ॥

नमामि ते पदद्वन्द्वं सर्वद्वन्द्वनिवारकम् ।
निर्द्वन्द्वया धिया विष्णो जिष्णादि सुरवन्दित ॥

स्तोतुं नाधिगच्छन्ति वाचो वाचस्पतेरपि ।
तमीष्टे॰ क इह स्तोतुं भक्तिरत्र बलीयसी ॥

अपि यो भगवानीशो मनः प्राचामगोचरः ।
समादर्शैरल्पधीभिः कथं स्तुत्यो वचः परः ॥

यं वाचो न विशन्तीशं मनतीह मनोनयम् ।
मनोगिरामतीतं तं कः स्तोतु शक्तिमान्भवेत् ॥

यस्य निःश्वसितं वेदाः सषडङ्गपदक्रमाः ।
तस्य देवस्य महिमा महान् कैरवगम्यते ॥

अतन्द्रितमनोबुद्धोन्द्रियायं सनकादयः ।
ध्यायन्तोऽपि हृदाकाशेन विन्दति यथार्थतः ॥

नारदाद्यैर्मुनिवरैराबालब्रह्मचारिभिः ।
गीयमानचरित्रोऽपि न सम्यग्योऽधिगम्यते ॥

तं सूक्ष्मरूपमजमव्ययमेकमाद्यं
ब्रह्माद्यगोचरमजेयमनन्तशक्तिम् ।
नित्यं निरामयममूर्तमचिन्त्यमूर्त्तिं
कस्त्वां चराचर चराचरभिन्न वेत्ति ॥

एकैकमेव तव नाम हरेर्मुरारे
जन्मार्जिताघमघिनां च महापदाढ्यम् ।
दद्यात्फलं च महितं महतो मखस्य
जप्तं मुकुन्दमधुसूदनमाधवेति ॥

नारायणेति नरकार्णवतारणेति
दामोदरेति मधुहेति चतुर्भुजेति ।
विश्वम्भरेति विरजेति जनार्दनेति
क्वास्तीह जन्मजपतां क्व कृतान्तभीतिः ॥

ये त्वां त्रिविक्रम सदा हृदि शीलयन्ति
कादम्बिनी रुचिरोचिषमम्बुजाक्षम् ।
सौदामिनी विलसितां शुकवीतमूर्त्तें
तेऽपि स्पृशन्ति तव कान्तिमचिन्त्यरूपाम् ॥

श्रीवत्सलाञ्छन हरेऽच्युतकैटभारे
गोविन्द तार्क्ष्यरथ केशव चक्रपाणे ।
लक्ष्मीपते दनुजसूदन शार्ङ्गपाणे
त्वद्भक्तिभाजि न भयं क्वचिदस्ति पुंसि ॥

यैरर्चितोऽसि भगवंस्तुलसीप्रसूनै-
र्दूरीकृतैणमदसौरभदिव्यगन्धैः ।
तानर्चयन्ति दिवि देवगणाः समस्ता
मन्दारदामभिरलं विमलस्वभावान् ॥

यद्वाचि नाम तव कामदमब्जनेत्र
यच्छ्रोत्रयोस्तवकथा मधुराक्षराणि ।
यच्चित्तभित्तिलिखितं भवतोऽस्ति रूपं
नीरूपभूपपदवी न हितैर्दुरापा ॥

ये त्वां भजन्ति सततं भुवि शेषशायि-
स्ताञ्छ्रीपते पितृपतीन्द्रकुबेरमुख्याः ।
वृन्दारका दिवि सदैव सभाजयन्ति
स्वर्गापवर्गसुखसन्ततिदानदक्ष ॥

ये त्वां स्तुवन्ति सततं दिवि तां स्तुवन्ति ।
सिद्धाप्सरोऽमरगणालसदब्जपाणे
विश्राणयत्यखिलसिद्धिद को विना त्वां
निर्वाणचारुकमलां कमलायताक्ष ॥

त्वं हंसि पासि सृजसि क्षणतः स्वलीला
लीलावपुर्धरविरिञ्चि नताङ्घ्रियुग्म ।
विश्वं त्वमेव परविश्वपतिस्त्वमेव
विश्वस्य बीजमसि तत्प्रणतोऽस्मि नित्यम् ॥

स्तोता त्वमेव दनुजेन्द्ररिपोस्तुतिस्त्वं
स्तुत्यस्त्वमेव सकलं हि भवानिहैकः ।
त्वत्तो न किञ्चिदपि भिन्नमवैमि विष्णो
तृष्णां सदा कृणुहि मे भवजाम्भवारे ॥

( स्क० महापु० काशी० ६०।२५-४४ )

## ३३. ब्रह्माकृता स्तुतिः

देव देव जगन्नाथ जगत्सृष्टमिदं मया।
ऋते त्वया हरे विष्णो नैवावस्थातुमर्हति॥
शास्ता त्वमस्य विश्वस्य विशुद्धस्य च नापरः।
त्वत्तोऽस्तीदं जगत्सर्वं तस्मात्त्वमनुशासय॥
देवदानवगन्धर्वाः सयक्षोरगराक्षसाः।
परस्परं विनिघ्नन्ति तांश्च त्वं रक्षितु क्षमः॥
त्वामृते पुण्डरीकाक्ष व्यापिताशेषविग्रहम्॥

त्वमस्य विश्वस्य चराचरस्य स्थितः सदा प्राणभृदात्मरूपी।
त्वया धृतं सर्वमिदं जगद्वै यतस्ततोऽसि त्वमुपेन्द्रसंज्ञः॥
प्रवेशनव्याप्तिविधायकोऽसि त्वमुच्यसे विष्णुरतो मुनीन्द्रैः।
निवासितं विश्वमिदं त्वया यद्वसेश्च धातोरिति वासुदेवः॥
तवानुगं विश्वमिदं विभुस्त्वमशेषविश्वस्य विभासि राजा।
सेनानुरूपं जगदेव यस्मादतः स्मृतस्त्वं किल विश्वसेनः॥
विलेखनादस्य चराचरस्य कृषेश्च धातोस्त्वमतोऽसि जिष्णुः॥
तस्मात्समस्तं ग्रहलोकपालं जगत्तवैतल्लयसर्वकालम्।
त्वमस्य सर्वस्य भवादिराजा वास्तुभद्रासनमद्वितीयम्॥
प्रदक्षिणावर्त्तन अस्ति शङ्खः करस्थितोऽतः पुरुषोत्तमोऽसि।
सुदर्शनं नाम तवास्तिचक्र चक्री ह्यतस्त्वं ह्यपरस्त्वचक्री॥
ध्वजोऽस्ति देवस्य सुपर्णसेवितस्तथासुवर्णच्छदनोऽस्तिवाहनम्।
तुरङ्गमाः सन्ति तवारिसंहरास्तथा हृषीकेश सुमत्तदन्तिनः॥
किरीटनिष्काङ्गदकर्णपूर केयूरहारोत्तमहेमसूत्रैः।
विचित्रवस्त्रोत्तररक्तमाल्यैर्विभूषितस्त्वं भवभीमसेन॥
श्रिया कदाचिच्च न मुच्यते भवान् भवन्ति ते नित्यमनन्तसम्पदः।
तवानुगा भक्तिरिहास्तु वै सतां मुकुन्द भक्ते त्वमतः प्रसीद॥

(स्क० महापु० अवन्ती० ५।२।१२-२३)

## ३४. महामुनिमार्कण्डेयकथितम् ( श्रीविष्णुसहस्रनामस्तोत्रम् )

**विनियोगः —**

ॐ अस्य विष्णुसहस्रनामस्तोत्रमन्त्रस्य मार्कण्डेयऋषिः, विष्णुर्देवता, अनुष्टुप्छन्दः, सर्वकामावाप्त्यर्थे जपे विनियोगः।

**ध्यानम्—**

सजलजलदनीलं दर्शितोदारशीलं
करतलधृतशैलं वेणुवाद्ये रसालम्।
व्रजजनकुलपालं कामिनीकेलिलोलं
तरुणतुलसिमालं नौमि गोपालबालम्॥

ॐ विश्वं विष्णुर्हृषीकेशः सर्वात्मा सर्वभावनः।
सर्वगः शर्वरीनाथो भूतग्रामाऽऽशयाशयः॥

अनादिनिधनो देवः सर्वज्ञः सर्वसम्भवः।
सर्वव्यापी जगद्धाता सर्वशक्तिधरोऽनघः॥

जगद्बीजं जगत्स्रष्टा जगदीशो जगत्पतिः।
जगद्गुरुर्जगन्नाथो जगद्धाता जगन्मयः॥

सर्वाऽऽकृतिधरः सर्वविश्वरूपी जनार्दनः।
अजन्मा शाश्वतो नित्यो विश्वाधारो विभुः प्रभुः॥

बहुरूपैकरूपश्च सर्वरूपधरो हरः।
कालाग्निप्रभवो वायुः प्रलयान्तकरोऽक्षयः॥

महार्णवो महामेघो जलबुद्बुदसम्भवः।
संस्कृतो विकृतो मत्स्यो महामत्स्यस्तिमिङ्गिलः॥

अनन्तो वासुकिः शेषो वराहो धरणीधरः।
पयः क्षीरविवेकाढ्यो हंसो हैमगिरिस्थितः॥

हयग्रीवो विशालाक्षो हयकर्णो दयाकृतिः।
मन्थनो रत्नहारी च कूर्मो धरधराधरः॥

विनिद्रो निद्रितो नन्दी सुनन्दो नन्दनप्रियः।
नाभिनालमृणाली च स्वंभूश्चतुराननः॥

प्रजापतिपरो दक्षः सृष्टिकर्त्ता प्रजाकरः।
मरीचिः कश्यपो दक्षः सुरासुरगुरुः कविः॥

वमनो वाममार्गी च वामकर्मा वृहद्वपुः ।
त्रैलोक्यक्रमणो दीपो बलियज्ञविनाशनः ॥

यज्ञहर्ता यज्ञकर्त्ता यज्ञेशो यज्ञभुग्विभुः ।
सहस्रांशुर्भगो भानुर्विवस्वानरविरंशुमान् ॥

तिग्मतेजाश्चाल्पतेजाः कर्मशाक्षी मनुर्यमः ।
देवराजः सुरपतिर्दानवारिः शचोपतिः ॥

अग्निर्वायुसखो वह्निर्वरुणो यादसाम्पतिः ।
नैर्ऋतोनादनोऽनादीरक्षयज्ञो धनाधिपः ॥

कुबेरो वित्तवान्वेगो वसुपालो विलासकृत् ।
अमृतस्रवणः सोमः सोमपानकरः सुधीः ॥

सर्वौषधिकरः श्रीमान्निशाकरदिवाकरः ।
विषारिर्विषहर्ता च विषकण्ठधरो गिरिः ॥

नीलकण्ठो वृषी रुद्रो भालचन्द्रो ह्युमापतिः ।
शिवः शान्तो वशी वीरो ध्यानी मानी च मानदः ॥

कृमिकीटो मृगव्याधो मृगहा मृगलाञ्छनः ।
वटुको भैरवो बालः कपाली दण्डविग्रहः ॥

श्मशानवासी मांसाशी दुष्टनाशी वरान्तकृत् ।
योगिनीत्रासको योगी ध्यानस्थो ध्यानवासनः ॥

सेनानी सेनदः स्कन्दो महाकालो गणाधिपः ।
आदिदेवो गणपतिर्विघ्नहा विघ्ननाशनः ॥

ऋद्धिसिद्धिप्रदो दन्ती भालचन्द्रो गजाननः ।
नृसिंह उग्रदंष्ट्रश्च नखो दानवनाशकृत् ॥

प्रह्लादपोषकर्त्ता च सर्वदैत्यजनेश्वर ।
शलभः सागरः साक्षी कल्पद्रुमविकल्पकः ॥

हेमदो हेमभागी च हिमकर्त्ता हिमाचलः ।
भूधरो भूमिदो मेरुः कैलासशिखरो गिरिः ॥

लोकालोकान्तरो लोकी विलोकी भुवनेश्वरः ।
दिक्पालो दिक्पतिर्दिव्यो दिव्यकायो जितेन्द्रियः ॥

विरूपो रूपवान् रागी नृत्यगीतविशारदः ।
हाहाहूहूश्चित्ररथो देवर्षिर्नारदः सखा ॥

विश्वेदेवाः साध्यदेवा घृताशीश्च चलोऽचलः।
कपिलो जल्पको वादी दत्तो हैहयसङ्घराट्॥
वशिष्ठो वामदेवश्च सप्तर्षिप्रवरो भृगुः।
जामदग्न्यो महावीरः क्षत्रियान्तकरो ह्यृषिः॥
हिरण्यकशिपुश्चैव हिरण्याक्षो हरप्रियः।
अगस्तिः पुलहो दक्षः पौलस्त्यो रावणो घटः॥
देवारिस्तापसस्तापी विभीषणहरिप्रियः।
तेजस्वीतेजदस्तेजी ईशो राजपतिः प्रभुः॥
दाशरथी राघवो रामो रघुवंशविवर्धनः।
सीतापतिः पति. श्रीमान्ब्रह्मण्यो भक्तवत्सलः॥
सन्नद्धः कवची खड्गी चीरवासा दिगम्बरः।
किरीटी कुण्डली चापी शङ्खचक्री गदाधरः॥
कौशल्यानन्दनोदारो भूमिशायी गुहप्रियः।
सौमित्रो भरतो बालः शत्रुघ्नो भरताग्रजः॥
लक्ष्मणः परवीरघ्नः स्त्रीसहायः कपीश्वरः।
हनुमानृक्षराजश्च सुग्रीवो बालिनाशनः॥
दूतप्रियो दूतकारी ह्यङ्गदो गदतां वरः।
वनध्वंशी वनी वेगो वानरध्वजलाङ्गुली॥
रविदंष्ट्री च लङ्काहा हाहाकारो वरप्रदः।
भवसेतुर्महासेतुर्बद्धसेतू रमेश्वरः॥
जानकीवल्लभकामी किरीटी कुण्डली खगी।
पुण्डरीकविशालाक्षो महाबाहुर्घनाकृतिः।
चञ्चलश्चपलः कामी वामी वामाङ्गवत्सलः।
स्त्रीप्रियः स्त्रीपरः स्त्रैणः स्त्रियो वामाङ्गवासकः॥
जितवैरी जितकामो जितक्रोधो जितेन्द्रियः।
शान्तो दान्तो दयारामो ह्येकस्त्रीव्रतधारकः॥
सात्त्विकः सत्त्वसंस्थानो मदहा क्रोधहा खरः।
बहुराक्षससंवीतः सर्वराक्षसनाशकृत्॥
रावणारी रणक्षुद्रदशमस्तकच्छेदकः।
राज्यकारी यज्ञकारी दाता भोक्ता तपोधनः॥
अयोध्याधिपतिः कान्तो वैकुण्ठोऽकुण्ठविग्रहः।
सत्यव्रतो व्रती शूरस्तपी सत्यफलप्रदः॥

सर्वसाक्षी सर्वगश्च सर्वप्राणहरोऽव्ययः ।
प्राणश्चाथाप्यपानश्च व्यानोदानः समानकः ॥
नागः कृकलः कूर्मश्च देवदत्तो धनञ्जयः ।
सर्वप्राणविदो व्यापी योगधारकधारकः ॥
तत्त्ववित्तत्त्वदस्तत्त्वी सर्वतत्त्वविशारदः ।
ध्यानस्थो ध्यानशाली च मनस्वी योगवित्तमः ॥
ब्रह्मज्ञो ब्रह्मदो ब्रह्मज्ञाता च ब्रह्मसम्भवः ।
आध्यात्मविद्विदो दीपो ज्योतिरूपो निरञ्जनः ॥
ज्ञानदोऽज्ञानहा ज्ञानी गुरुः शिष्योपदेशकः ।
सुशिष्यः शिक्षितः शाली शिष्यशिक्षाविशारदः ॥
मन्त्रदो मन्त्रहा मन्त्री तन्त्री तन्त्रजनप्रियः ।
सन्मन्त्रो मन्त्रविन्मन्त्री यन्त्रमन्त्रैकभञ्जनः ॥
मारणो मोहनो मोही स्तम्भोच्चाटनकृत्खलः ।
बहुमायो विमायश्च महामायाविमोहकः ॥
मोक्षदो बन्धको बन्दी ह्याकर्षणविकर्षणः ।
ह्रींकारो बीजरूपी च क्लींकारः कीलकाधिपः ॥
सौंकारः शक्तिमाञ्च्छक्तिः सर्वशक्तिधरो धरः ।
अकारोकार ओंकारश्छन्दोगायत्रसम्भवः ॥
वेदो वेदविदो वेदी वेदाध्यायी सदाशिवः ।
ऋग्यजुःसामाथर्वेशः सामगानकरोऽकरी ॥
त्रिपदो बहुपादी च शतपथः सर्वतोमुखः ।
प्राकृतः संस्कृतो योगी गीतग्रन्थप्रहेलिकः ॥
सगुणो विगुणच्छन्दो निःसङ्गो विगुणो गुणी ।
निर्गुणो गुणवान्सङ्गी कर्मी धर्मी च कर्मदः ॥
निष्कर्मा कामकामी च निःसङ्गः सङ्गवर्जितः ।
निर्लोभो निरहंकारी निष्किञ्चन जनप्रियः ॥
सर्वसङ्गकरो रागी सर्वत्यागी बहिश्चरः ।
एकपादो द्विपादश्च बहुपादोऽल्पपादकः ॥
द्विपदस्त्रिपदोऽपादी विपादी पदसंग्रहः ।
खेचरो भूचरो भ्रामी भृङ्गकीटमधुप्रियः ॥
क्रतुः संवत्सरो मासो गणितार्को ह्यहर्निशः ।
कृतं त्रेता कलिश्चैव द्वापरश्चतुराकृतिः ॥

दिवाकालकरः कालः कुलधर्मः सनातनः ।
कलाकाष्ठाकलानाड्यो यामः पक्षः सितासितः ॥
युगो युगन्धरो योग्यो युगधर्मप्रवर्त्तकः ।
कुलाचारः कुलकरः कुलदैवकरः कुली ॥
चतुराश्रमचारी च गृहस्थो ह्यतिथिप्रियः ।
वनस्थो वनचारी च वानप्रस्थाश्रमोऽश्रमी ॥
वटुको ब्रह्मचारी च शिखासूत्री कमण्डली ।
त्रिजटी ध्यानवान्ध्यानी बद्रिकाश्रमवासकृत् ॥
हेमाद्रिप्रसभो हैमी हेमराशिर्हिमाकरः ।
महाप्रस्थानको विप्रो विरागी रागवान्गृही ॥
नरनारायणोऽनागो केदारोदारविग्रहः ।
गङ्गाद्वारतपःसारस्तपोवनतपोनिधिः ॥
निधिरेष महापद्मः पद्माकरश्रियालयः ।
चक्रस्थश्चक्रपालस्थश्चक्रवर्ती नराधिपः ॥
आयुर्वेदविदो वैद्यो धन्वन्तरिश्च रोगहा ।
औषधीबीजसम्भूतो रोगी रोगविनाशकृत् ॥
चेतनश्चेतकोऽचिन्त्यश्चित्तचिन्ताविनाशकृत् ।
अतीन्द्रियः सुखस्पर्शश्चरचारी विहङ्गमः ॥
गरुडः पक्षिराजश्च चाक्षुषो विनतात्मजः ।
विष्णुयानविमानस्थो मनोमयतुरङ्गमः ॥
बहुवृष्टिकरो वर्षी ऐरावणविरावणः ।
उच्चैःश्रवाऽरुणो गामी हरिदश्वो हरिप्रियः ॥
प्रावृषो मेघमाली च गजरत्नपुरन्दरः ।
वसुदो वसुधारश्च निद्रालुः पन्नगाशनः ॥
शेषशायी जलेशायी व्यासः सत्यवतीसुतः ।
वेदव्यासकरो वाग्मी बहुशाखाविकल्पकः ॥
स्मृतिः पुराणधर्मार्थी परावरविचक्षणः ।
सहस्रशीर्षा सहस्राक्षः सहस्रवदनोज्ज्वलः ॥
सहस्रबाहुः सहस्रांशुः सहस्रकिरणो नरः ।
बहुशीर्षैकशीर्षश्च त्रिशिरा विशिराः शिरी ॥
जटिलो भस्मरागी च दिव्याम्बरधरः शुचिः ।
अणुरूपो बृहद्रूपो विरूपो विकराकृतिः ॥

समुद्रमाथको माथी सर्वरत्नहरोहरिः ।
वज्रवैडूर्यको वज्री चिन्तामणिमहामणिः ॥

अनिर्मूल्यो महामूल्यो निर्मूल्यः सुरभिः सुखी ।
पिता माता शिशुर्बन्धुर्धाता त्वष्टार्यमा यमः ॥

अन्तस्थो बाह्यकारी च बहिस्थो वै बहिश्चरः ।
पावनः पावको पाकी सर्वभक्षी हुताशनः ॥

भगवान्भगहा भागी भवभञ्जो भयङ्करः ।
कायस्थः कार्यकारी च कार्यकर्त्ता करप्रदः ॥

एकधर्मा द्विधर्मा च सुखी दूत्योपजीवकः ।
बालकस्तारकस्त्राता कालो भूषकभक्षकः ॥

सञ्जीवनो जीवकर्ता सजीवो जीवसम्भवः ।
षड्विंशको महाविष्णुः सर्वव्यापी महेश्वरः ॥

दिव्याङ्गदो मुक्तमाली श्रीवत्सोम करध्वजः ।
श्याममूर्तिर्घनश्यामः पीतवासा शुभाननः ॥

चीरवासा विवासाश्च भूतदानववल्लभः ।
अमृतोऽमृतभागी च मोहिनीरूपधारकः ॥

दिव्यदृष्टिः समदृष्टिर्देवदानववञ्चकः ।
कबन्धः केतुकारी च स्वर्भानुश्चन्द्रतापनः ॥

ग्रहराजो ग्रही ग्राहः सर्वग्रहविमोचकः ।
दानमानजपो होमः सानुकूलः शुभग्रहः ॥

विघ्नकर्त्ताऽपहर्त्ता च विघ्ननाशो विनायकः ।
अपकारोपकारी च सर्वसिद्धिफलप्रदः ॥

सेवकः सामदानी च भेदी दण्डी च मत्सरी ।
दयावान्दानशीलश्च दानीयज्वाप्रतिग्रही ॥

हविरग्निश्चरुस्थाली समिधश्चानिलो यमः ।
होतोद्गता शुचिः कुण्डः सामगो वैकृतिः सवः ॥

द्रव्यं पात्राणि सङ्कल्पो मुशलो ह्यरणिः कुशः ।
दीक्षितो मण्डपो वेदिर्यजमानः पशुः क्रतुः ॥

दक्षिणा स्वस्तिमान्स्वस्तिर्ह्याशीर्वादः शुभप्रदः ।
आदिवृक्षो महावृक्षो देववृक्षो वनस्पतिः ॥

प्रयोगो वेणुमान्वेणी न्यग्रोधश्चाऽक्षयो वटः ।
सुतीर्थस्तीर्थकारी च तीर्थराजो व्रती व्रतः ॥

वृत्तिदाता पृथुः पुत्रो दोग्धा गौर्वत्स एव च ।
क्षीरं क्षीरवहः क्षीरी क्षीरभागविभागवित् ॥
राज्यभागविदोभागी सर्वभागविकल्पकः ।
वाहनो वाहको वेगी पदचारा तपश्चरः ॥
गोपनो गोपको गोपी गोपकन्याविहारकृत् ।
वासुदेवो विशालाक्षः कृष्णो गोपीजनप्रियः ॥
देवकीनन्दनो नन्दी नन्दगोपगृहाऽऽश्रमी ।
यशोदानन्दनो दामी दामोदर उलूखली ॥
पूतनारिः पदाकारी लीलाशकटभञ्जकः ।
नवनीतप्रियो वाग्मी वत्सपालकवालकः ॥
वत्सरूपधरो वत्सी वत्सहा धेनुकान्तकृत् ।
बकारिर्वनवासी च वनक्रीडाविशारदः ॥
कृष्णवर्णाकृतिः कान्तो वेणुवेत्रविधारकः ।
गोपमोक्षकरो मोक्षो यमुनापुलिने चरः ॥
मायावत्सकरो मायी ब्रह्ममायापमोहकः ।
आत्मसारविहारज्ञो गोपदारकदारकः ॥
गोचरी गोपतिर्गोपो गोवर्धनधरो बली ।
इन्द्रद्युम्नो मखध्वंसी वृष्टिहा गोपरक्षकः ॥
सुरभित्राणकर्त्ता च दावपानकरः कली ।
कालीयमर्दनः काली यमुनाह्रदविहारकः ॥
सङ्कर्षणो बलश्लाघ्यो बलदेवो हलायुधः ।
लाङ्गली मुसली चक्री रामो रोहिणिनन्दनः ॥
यमुनाकर्षणोद्धारो नीलवासा हली हली ।
रेवतीरमणो लोलो बहुमानकरः परः ॥
धेनुकारिर्महावारो गोपकन्याविदूषकः ।
काममानहरः कामी गोपीवासोऽपतस्करः ॥
वेणुवादी च नादी च नृत्यगीतविशारदः ।
गोपीमोहकरो गानी रासको रजनीचरः ॥
दिव्यमाली विमाली च वनमालाविभूषितः ।
कैटभारिश्च कंसारिर्मधुहा मधुसूदनः ॥
चाणूरमर्दनो मल्लो मुष्टी मुष्टिकनाशकृत् ।
मुरहा मोदको मोदी मदघ्नो नरकान्तकृत् ॥

विध्याध्यायी भूमिशायी सुदामा सुसखा सुखी।
सकलो विकलो वंद्य: कलितो वै कलानिधि: ॥
विद्याशाली विशाली च पितृमातृविमोक्षक:।
रुक्मिणीरमणो रम्य: कालिन्दीपतिशङ्खहा ॥
पाञ्चजन्यो महापद्मो बहुनायकनायक:।
धुन्धुमारो निकुम्भघ्न: शम्बरान्तो रतिप्रिय: ॥
प्रद्युम्नश्चानिरुद्धश्च सात्वतां पतिरर्जुन:।
फाल्गुनश्च गुडाकेश: सव्यसाचीधनञ्जय: ॥
किरीटी च धनुष्पाणिर्धनुर्वेदविशारद:।
शिखण्डी सात्यकि: शैव्यो भीमो भीमप्रराक्रम: ॥
पाञ्चालश्चाभिमन्युश्च सौभद्रो द्रौपदीपति:।
युधिष्ठिरो धर्मराज: सत्यवादी शुचिव्रत: ॥
नकुल: सहदेवश्च कर्णो दुर्योधनो वृणी।
गाङ्गेयोऽथ गदापाणिर्भीष्मो भागीरथी सुत: ॥
प्रज्ञाचक्षुर्धृतराष्ट्रो भारद्वाजोऽथ गौतम:।
अश्वत्थामा विकर्णश्च जह्नुर्युद्धविशारद: ॥
सीमन्तिको गदी गाल्वो विश्वामित्रो दुरासद:।
दुर्वासा दुर्विनीतश्च मार्कण्डेयो महामुनि: ॥
लोमशो निर्मलोऽलोभी दीर्घायुश्च चिरोऽचिरी।
पुनर्जीवी मृतो भावी भूतो भव्यो भविष्यक: ॥
त्रिकालेऽथ त्रिलिङ्गश्च त्रिनेत्रस्त्रिपदीपति:।
यादवो याज्ञवल्क्यश्च यदुवंशविवर्द्धन: ॥
शल्यक्रीडी विक्रोडश्च यादवान्तकर: कलि:।
सदयो हृदयो दायो दायदो दायभाग्दयी ॥
महोदधिर्महीपृष्ठो नीलपर्वतवासकृत्।
एकवर्णो विवर्णश्च सर्ववर्णबहिश्चर: ॥
यज्ञनिन्दी वेदनिन्दी वेदबाह्यो बलो बलि:।
बौद्धारिर्बाधको बाधो जगन्नाथो जगत्पति: ॥
भक्तिर्भागवतो भागी विभक्तो भगवत्प्रिय:।
त्रिगामोऽथ नवारण्यो गुह्योपनिषदासन: ॥
शालिग्राम: शिलायुक्तो विशालो गण्डकाश्रय:।
श्रुतदेव: श्रुत: श्रावी श्रुतबोध: श्रुतश्रवा: ॥

कल्किः कालकण्ठः कल्को दुष्टम्लेच्छविनाशकृत् ।
कुङ्कुमी धवलो धारः क्षमाकरो वृषाकपिः ॥

किङ्करः किन्नरः कण्वः केकी किम्पुरुषाधिपः ।
एकरोमा विरोमा च बहुरोमा बृहत्कविः ॥

वज्रप्रहरणो वज्री वृत्रघ्नो वासवानुजः ।
बहुतीर्थंकरस्तीर्थः सर्वतीर्थजनेश्वरः ॥

व्यतीपातोपरागश्च दानवृद्धिकरः शुभः ।
असंख्येयोऽप्रमेयश्च संख्याकारो विसंख्यकः ॥

पिहिकोत्तारकस्तारो बालचन्द्रः सुधाकरः ।
किं वर्णः कीदृशः किञ्चित्किं स्वभावः किमाश्रयः ॥

निर्लोकश्च निराकारी बह्वाकारैककारकः ।
दौहित्रः पुत्रिकः पौत्रो नप्ता वंशधरो धरः ॥

द्रवीभूतो दयालुश्च सर्वसिद्धिप्रदो मणिः ॥

आधारोऽपि विधारश्च धरासूनुः सुमङ्गलः ।
मङ्गलो मङ्गलाकारो माङ्गल्यः सर्वमङ्गलः ॥

नाम्नां सहस्रं नामेदं विष्णोरतुलतेजसः ।
सर्वसिद्धिकरं काम्यं पुण्यं हरिहरात्मकम् ॥

यः पठेत्प्रातरुत्थाय शुचिर्भूत्वा समाहितः ।
यश्चेद श्रृणुयान्नित्यं नरो निश्चलमानसः ॥

त्रिसन्ध्यं श्रद्धया युक्त सर्वपापैः प्रमुच्यते ।
नन्दते पुत्रपौत्रैश्च दारैर्भृत्यैश्च पूजितः ॥

प्राप्नुते विपुलां लक्ष्मीं मुच्यते सर्वसङ्कटात् ।
सर्वान्कामानवाप्नोति लभते विपुलं यशः ॥

विद्यावाञ्जायते विप्रः क्षत्रियो विजयी भवेत् ।
वैश्यश्च धनलाभाढ्यः शूद्रः सुखमवाप्नुयात् ॥

रणे घोरे विवादे च व्यापारे पारतन्त्रके ।
विजयी जयमाप्नोति सर्वदा सर्वकर्मसु ॥

एकधा दशधा चैव शतधा च सहस्रधा ।
पठते हि नरो नित्यं तथैव फलमश्नुते ॥

पुत्रार्थी प्राप्नुते पुत्रान्धनार्थी धनमव्ययम् ।
मोक्षार्थी प्राप्नुते मोक्षं धर्मार्थी धर्मसञ्चयम् ॥

कन्यार्थी प्राप्नुते कन्यां दुर्लभां यत्सुरैरपि ।
ज्ञानार्थी जायते ज्ञानी योगी योगेषु युज्यते ॥

महोत्पातेषु घोरेषु दुर्भिक्षे राजविग्रहे ।
महामारी समुद्भूते दारिद्र्ये दुःखपीडिते ॥

अरण्ये प्रान्तरे वाऽपि दावाग्निपरिवारिते ।
सिंहव्याघ्राभिभूतेऽपि वने हस्तिसमाकुले ॥
राज्ञा क्रुद्धेन चाज्ञप्ते दस्युभिः सह सङ्गमे ।
विद्युत्पातेषु घोरेषु स्मर्तव्यं हि सदा नरैः ॥

ग्रहपीडासु चोग्रासु वधबन्धगतावपि ।
महार्णवे महानद्यां पोतस्थेषु न चापदः ॥

रोगग्रस्तो विवर्णश्च गतकेशनखत्वचः ।
पठनाच्छ्रवणाद्वापि दिव्यकाया भवन्ति ते ॥
तुलसीवनसंस्थाने सरोद्वीपे सुरालये ।
बद्रिकाश्रमे शुभे देशे गङ्गाद्वारे तपोवने ॥

मधुवने प्रयागे च द्वारकायां समाहितः ।
महाकालवने सिद्धे नियताः सर्वकामिकाः ॥
ये पठन्ति शतावर्तं भक्तिमन्तो जितेन्द्रियाः ।
ते सिद्धाः सिद्धिदा लोके विचरन्ति महीतले ॥
अन्योन्यभेदभेदानां मैत्रीकरणमुत्तमम् ।
मोहनं मोहनानां च पवित्रं पापनाशनम् ॥
बालग्रहविनाशाय शान्तीकरणमुत्तमम् ।
दुर्वृत्तानां च पापानां बुद्धिनाशकरं परम् ॥
पतद्गर्भा च वन्ध्या च स्राविणी काकवन्ध्यका ।
अनायासेन शततं पुत्रमेव प्रसूयते ॥
पयः पुष्कलदावागोवहुधान्यफला कृषिः ।
स्वामिधर्मपराभृत्या नारी पतिव्रता भवेत् ॥
अकालमृत्युनाशाय तथा दुःस्वप्नदर्शने ।
शान्तिकर्मणि सर्वत्र स्मर्त्तव्यं च सदा नरैः ॥
यः पठत्यन्वहं मर्त्यः शुचिष्मान्विष्णुसन्निधौ ।
एकाकी च जिताहारो जितक्रोधो जितेन्द्रियः ॥
गरुडारोहसंपन्नः पीतवासाश्चतुर्भुजः ।
वाञ्छितं प्राप्य लोकेऽस्मिन्विष्णुलोके स गच्छति ॥

एकतः सकला विद्या एकतः सकलं तपः।
एकतः सकलो धर्मो नाम विष्णोस्तथैकतः॥

यो (मां) हि नामसहस्रेण स्तोतुमिच्छति वै द्विजः।
सोऽय (ऽह) मेकेन श्लोकेन स्तुत एव न संशयः॥

सहस्राक्षः सहस्रपात्सहस्रवदनोज्ज्वलः।
सहस्रनामानन्ताक्षः सहस्रबाहुर्नमोऽस्तु ते॥

विष्णोर्नाम सहस्रं वै पुराणं वेदसम्मितम्।
पठितव्यं सदा भक्तैः सर्वमङ्गलमङ्गलम्॥

(स्क० महापु० अवन्ती० वैष्णव० ७४।७४-२३१)

## ३५. अन्धककृता विष्णुस्तुतिः

जय कृष्णाय हरये विष्णवे जिष्णवे नमः।
हृषीकेश जगद्धात्रे अच्युताय महात्मने॥

नमः पङ्कजनाभाय नमः पङ्कजमालिने।
जनार्दनाय श्रीशाय श्रीपते पीतवाससे॥

गोविन्दाय नमो नित्यं नमो जलधिशायिने।
नमः करालवक्त्राय नरसिंहाय नादिने॥

शार्ङ्गिणे सितवर्णाय शङ्खचक्रगदाभृते।
नमो वामनरूपाय यज्ञरूपाय ते नमः॥

नमो वराहरूपाय क्रान्तलोकत्रयाय च।
व्याप्ताशेषदिगन्ताय केशवाय नमो नमः॥
वासुदेव नमस्तुभ्यं नमः कैटभनाशिने।
लक्ष्म्यालय सुरश्रेष्ठ नमस्ते सुरनायक॥

विष्णोर्देवाधिदेवस्य प्रमाणं येऽपि कुर्वते।
प्रजापतेर्जगद्धातुस्तेषामपि नमाम्यहम्॥

समस्तभूतदेवस्य वासुदेवस्य धीमतः।
प्रणामं ये प्रकुर्वन्ति तेषामपि नमाम्यहम्॥

गुणानां हि निधानाय नमस्तेऽस्तु पुनः पुनः।
कारुण्याम्बुनिधे देव सर्वभक्तिप्रियाय च॥

(स्क० महापु० रेवा० ४८।१५-२४)

## ३६. अप्सरोभिर्कृता नारायणस्तुतिः

पश्याम नादिं तव देव नान्तं
न मध्यमव्याकृतरूपपारम् ।
परायणं त्वां जगतामनन्तं
नताः स्म नारायणमात्मभूतम् ॥

महीनभोवायुजलाग्नयस्त्वं
शब्दादिरूपस्तु परापरात्मन् ।
त्वत्तो भवत्यच्युत सर्वमेत-
द्भेदादिरूपोऽसि विभो त्वमात्मन् ॥

द्रष्टासि रूपस्य परस्य वेत्ता
श्रोता च शब्दस्य हरे त्वमेकः ।
स्रष्टा भवान्सर्वगतोऽखिलस्य
घ्राता च गन्धस्य पृथक्शरीरी ॥

सुरेषु सर्वेषु न सोऽस्ति कश्चि-
न्मनुष्यलोकेषु न सोऽस्ति कश्चित् ।
पश्वादिवर्गेषु न सोऽस्ति कश्चि-
द्यो नांशभूतस्तव देवदेव ॥

ब्रह्माम्बुधीन्दुप्रमुखानि सौम्ये
शक्रादिरूपाणि तवोत्तमानि ।
समुद्ररूप तव धैर्यवत्सु
तेजः स्वरूपेषु रविस्तथाग्निः ॥

क्षमाधनेषु क्षितिरूपमग्र्यं
शीघ्रेषु शीघ्रो बलवत्सु वायुः ।
मनुष्यरूप तव राजवेषो
मूढेषु सर्वेश्वर पादपोऽसि ॥

सर्वानयेष्वच्युत दानवस्त्वं
सनत्सुजातश्च विवेकवत्सु ।
रसस्वरूपेण जलस्थितोऽसि
गन्धस्वरूपं भवतो धरित्र्याम् ॥

दृश्यस्वरूपश्च हुताशनस्त्वं
स्पर्शस्वरूपं भवतः समीरे ।
शब्दादिकं ते नभसि स्वरूपं
मन्तव्यरूपो मनसि प्रभो त्वम् ॥

बोधस्वरूपश्च मतौ त्वमेकः
सर्वत्र सर्वेश्वर सर्वभूत ।
पश्यामि ते नाभिसरोजमध्ये
ब्रह्माणमीशं च हरं भ्रुकुट्याम् ॥

तवाऽश्विनौ कर्णगतौ समस्तां-
स्तवाऽऽस्थिता बाहुषु लोकपालाः ।
घ्राणोऽनिलो नेत्रगतौ रवीन्दू
जिह्वा च ते नाथ सरस्वतीयम् ॥

पादौ धरित्री जठरं समस्तां-
ल्लोकान्हृषीकेश विलोकयामः ।
जङ्घे वयं पादतलाङ्गुलीषु
पिशाचयक्षोरगसिद्धसङ्घाः ॥

पुंस्त्वे प्रजानां पतिरोष्ठयुग्मे
प्रतिष्ठितास्ते क्रतवः समस्ताः ।
सर्वे वयं ते दशनेषु देव
दंष्ट्रासु देवा ह्यभवंश्च दन्ताः ॥

रोमाण्यशेषास्तव देवसङ्घा
विद्याधरा नाथ तवाङ्घ्रिरेखाः ।
साङ्गाः समस्तास्तव देव वेदाः
समास्थिताः सन्धिषु बाहुभूताः ॥

वराहभूतं धरणीधरस्ते
नृसिंहरूपं च सदा करालम् ।
पश्याम ते वाजिशिरस्तथोच्चै-
स्त्रिविक्रमे यच्च तदाऽप्रमेयम् ॥

अमी समुद्रास्तव देव देहे
मौर्वालयः शैलधरास्तथाऽमी ।
इमाश्च गङ्गाप्रमुखाः स्रवन्त्यो
द्वीपान्यशेषाणि वनादिदेशाः ॥

स्तुवन्ति चेमे मुनयस्तवेश
देहे स्थितास्त्वन्महिमानमग्र्यम् ।
त्वामीशितारं जगतामनन्तं
यजन्ति यज्ञैः किल यज्विनोऽमी ॥

त्वत्तोऽहि सौम्यं जगतीह किञ्चि-
त्वत्तो न रौद्रं च समस्तमूर्त्ते ।
त्वत्तो न शीतं च न केशवोष्णं
सर्वस्वरूपातिशयी त्वमेव ॥

प्रसीद सर्वेश्वर सर्वभूत सनातनात्मन्परमेश्वरेश ।
त्वन्मायया मोहितमानसाभिर्यत्तेऽपराद्धं तदिदं क्षमस्व ॥
किं वाऽपराद्धं तव देवदेव यन्मायया नो हृदयं तवाऽपि ।
मायाभिशङ्कि प्रणतार्त्तिहन्तर्मनो हि नो विह्वलतामुपैति ॥
न तेऽपराद्धं यदि तेऽपराद्धमस्माभिरुन्मार्गविवर्त्तनीभिः ।
तत्क्षम्यतां सृष्टिकृतस्तवैव देवाऽपराधः सृजतो विवेकम् ॥

नमो नमस्ते गोविन्द नारायण जनार्दन ।
त्वन्नामस्मरणात्पापमशेषं नः प्रणश्यतु ॥
नमोऽनन्त नमस्तुभ्यं विश्वात्मन्विश्वभावन ।
त्वन्नामस्मरणात्पापमशेषं नः प्रणश्यतु ॥
वरेण्य यज्ञपुरुष प्रजापालन वामन ।
त्वन्नामस्मरणात्पापमशेषं नः प्रणश्यतु ॥
नमोऽस्तु तेऽब्जनाभाय प्रजापतिकृते हर ।
त्वन्नामस्मरणात्पापमशेषं नः प्रणश्यतु ॥
नमः परस्मै श्रीशाय वासुदेवाय वेधसे ।
स्वेच्छया गुणयुक्ताय सर्गस्थित्यन्तकारिणे ॥
उपसंहर विश्वात्मन्रूपमेतत्सनातनम् ।
वर्धमानं न नो द्रष्टुं समर्थः चक्षुरीश्वर ॥
प्रलयाग्निसहस्रस्य समा दीप्तिस्तवाच्युत ।
प्रमाणेन दिशो भूमिर्गगनं च समावृतम् ॥
न विद्मः कुत्र वर्त्तामो भवान्नाथोपलक्ष्यते ।
सर्वं जगदिहैकस्थं पिण्डितं लक्षयामहे ॥
किं वर्णयामो रूपं ते किं प्रमाणमिदं हरे ।
माहात्म्यं किं नु ते देव यज्जिह्वया न गोचरे ॥
वक्तारो वाऽयुतेनापि बुद्धीनामयुतायुतैः ।
गुणनिर्वर्णनं नाथ कर्त्तुं तव न शक्यते ॥
तदेतद्दर्शितं रूपं प्रसादः परमः कृतः ।
छन्दतो जगतामीश तदेतदुपसंहर ॥

( स्क० महापु० रेवाखण्ड० १९३।१६-४७ )

# (घ) देवीस्तुतयः

## १. देवैः कृता दुर्गास्तुतिः ( वज्रपञ्जरस्तोत्रम् )

नमो देवि जगद्धात्रि जगत्त्रयमहारणे।
महेश्वर महाशक्ते दैत्यद्रुमकुठारके॥
त्रैलोक्यव्यापिनि शिवे शङ्खचक्रगदाधरि।
स्वशार्ङ्गव्यग्रहस्ताग्रे नमो विष्णुस्वरूपिणि॥
हंसयाने नमस्तुभ्यं सर्वसृष्टिविधायिनि।
प्राचां वाचां जन्मभूमे चतुराननरूपिणि॥
त्वमैन्द्री त्वं च कौवेरी वायवी त्वं त्वमम्बुपा।
त्वं यामी नैर्ऋती त्वं च त्वमैशी त्व च पावकी॥
शशाङ्ककौमुदी त्वं च सौरी शक्तिस्त्वमेव च।
सर्वदेवमयी शक्तिस्त्वमेव परमेश्वरी॥
त्वं गौरी त्वं च सावित्री त्वं गायत्री सरस्वती।
प्रकृतिस्त्वं मतिस्त्वं च त्वमहं कृतिरूपिणी॥
चेतःस्वरूपिणी त्वं वै त्वं सर्वेन्द्रियरूपिणी।
पञ्चतन्मात्ररूपा त्वं महाभूतात्मिकेऽम्बिके॥
शब्दादिरूपिणी त्वं वै करणानुग्रहा त्वमु।
ब्रह्माण्डकर्त्री त्वं देवी ब्रह्माण्डान्तस्त्वमेव हि॥
त्वं पराऽसि महादेवि त्वं च देवि परापरा।
परापराणां परमा परमात्मस्वरूपिणी॥
सर्वरूपा त्वमीशानि त्वमरूपाऽसि सर्वगे।
त्वं चिच्छक्तिर्महामाये त्वं स्वाहा त्व स्वधाभृते॥
वषड्वौषट्स्वरूपासि त्वमेव प्रणवात्मिका।
सर्वमन्त्रमयी त्वं वै ब्रह्माद्यास्त्वत्समुद्भवाः॥
चतुर्वर्गात्मिका त्वं वै चतुर्वर्गफलोदये।
त्वत्तः सर्वमिदं विश्वं त्वयि सर्वं जगन्निधे॥
यद्दृश्यं यददृश्यं च स्थूलसूक्ष्मस्वरूपत.।
तत्र त्वं शक्तिरूपेण किञ्चिन्न त्वदृते क्वचित्॥

मातस्त्वयाद्य विनिहत्य महासुरेन्द्रं
दुर्गं निसर्गविबुधार्पितदैत्यसैन्यम् ।
त्राताः स्म देवि सततं नमतां शरण्ये
त्वत्तोऽपरः क इह यं शरणं व्रजामः ॥

लोके त एव धनधान्यसमृद्धिभाज-
स्ते पुत्रपौत्रसुकलत्रसुमित्रवन्तः ।
तेषां यशः प्रसरचन्द्रकरावदातं
विश्वं भवेद्भ्रुवसि येषु सुदृक्त्वमीशे ॥

त्वद्भक्तिचेतसि जनेन विपत्तिलेशः
क्लेशः क्व वा नु भवतीनतिकृत्सु पुंसु ।
त्वन्नामसंसृतिजुषां सकलायुषां क्व
भूयः पुनर्जननिरिह त्रिपुरारिपत्नि ॥

चित्रं यदत्र समरे स हि दुर्गदैत्य-
स्त्वद्दृष्टिपातमधिगम्य सुधानिधानम् ।
मृत्योर्वशत्वमगमद्विदितं भवानि !
दुष्टोऽपि ते दृशिगतः कुगतिं न याति ॥

त्वच्छस्त्रवह्निशलभत्वमिता अपीह
दैत्याः पतङ्गरुचिमाप्य दिवं व्रजन्ति ।
सन्तः खलेष्वपि न दुष्टधियो यतः स्युः
साधुष्विव प्रणयिनः स्वपथं दिशन्ति ॥

प्राच्यां मृडानि परिपाहि सदा सदा नतान्नो
याम्यामव प्रतिपदं विपदो भवानि ।
प्रत्यग्दिशि त्रिपुरतापनपत्नि रक्ष
त्वं पाह्युदीचि निजभक्तजनान्महेशि ॥

ब्रह्माणि रक्ष सततं नतमौलिदेशं
त्वं वैष्णवि प्रतिकुल परिपालयाऽधः ।
रुद्राग्निनैरृतिसदागतिदिक्षु पान्तु
मृत्युञ्जयात्रिनयनात्रिपुरात्रिशक्तयः ॥

पातु त्रिशूलममले तव मौलिजान्नो
भालस्थलं शशिकलाभृदुमाभ्रुवौ च ।
नेत्रे त्रिलोचनवधूर्गिरिजा च नासा-
मोष्ठं जया च विजया त्वधरप्रदेशम् ॥

श्रोत्रद्वयं श्रुतिरवादशनावलिं श्री-
श्चण्डी कपोलयुगलं रसनाञ्च वाणी।
पायात्सदैव चिबुकं जयमङ्गला नः
कात्यायनी वदनमण्डलमेव सर्वम्॥

कण्ठप्रदेशमवतादिह नीलकण्ठी
भूदारशक्तिरनिशञ्च कृकाटिकायाम्।
कौर्म्यं सदेशमनिशं भुजदण्डमैन्द्री
पद्मा च पाणिफलकं नतिकारिणां नः॥

हस्ताङ्गुलीः कमलजा विरजा नखांश्च
कक्षान्तरन्तरणिमण्डलगा तमोघ्नी।
वक्षःस्थलं स्थलचरी हृदयं धरित्री
कुक्षिद्वयन्त्ववतु नः क्षणदाचरघ्नी॥

अव्यात्सदोदरदरीजगदीश्वरो नो
नाभिं नभोगतिरजा त्वथ पृष्ठदेशम्।
पायात्कटिञ्च विकटा परमा स्फितौ नो
गुह्यं गुहारणिरपानमपायहन्त्री॥

ऊरुद्वयञ्च विपुला ललिता च जानू
जङ्घे जवाऽवतु कठोरतराऽत्र गुल्फौ।
पादौ रसातलचराङ्गुलिदेशमुग्रा
चान्द्री नखान्पदतलं तलवासिनी च॥

गृहं रक्षतु नो लक्ष्मीः क्षेत्रं क्षेमकरी सदा।
पातु पुत्रान्प्रियकरी पायादायुः सनातनी॥

यशः पातु महादेवी धर्मं पातु धनुर्धरी।
कुलदेवी कुलं पातु सद्गतिं सद्गतिप्रदा॥

रणे राजकुले द्यूते सङ्ग्रामे शत्रुसङ्कटे।
गृहे वने जलादौ च शर्वाणी सर्वतोऽवतु॥

इति स्तुत्वा जगद्धात्रीं प्रणेमुश्च पुनः पुनः।
सर्वे सवासवा देवाः सर्षिगन्धर्वचारणाः॥

ततस्तुष्टा जगन्माता तानाह सुरसत्तमान्।
स्वाधिकारान्सुराः सर्वे शासन्तु प्राग्यथा यथा॥

तुष्टाहमनया स्तुत्या नितरान्तु यथार्थया।
वरमन्यं प्रदास्यामि तच्छृणुध्वं सुरोत्तमाः॥

**दुर्गोवाच—**

य: स्तोष्यति तु मां भक्त्या नर: स्तुत्याऽनया शुचि: ।
तस्याऽहं नाशमिष्यामि विपदञ्च पदे पदे ॥
एतत्स्तोत्रस्य कवचं परिधास्यति यो नर: ।
तस्य क्वचिद्भयं नास्ति वज्रपञ्जरगस्य हि ॥

अद्य प्रभृति मे नाम दुर्गेति ख्यातिमेष्यति ।
दुर्गदैत्यस्य समरे पातनादतिदुर्गमात् ॥
ये मां दुर्गां शरणगा न तेषां दुर्गति: क्वचित् ।
दुर्गास्तुतिरियं पुण्या वज्रपञ्जरसञ्ज्ञिका ॥
अनया कवचं कृत्वा मा बिभेतु यमादपि ।
भूतप्रेतपिशाचाश्च शाकिनी डाकिनी गणा: ॥
झोण्टिङ्गा राक्षसा: क्रूरा विषसर्पाग्निदस्यव: ।
वेतालाश्चापि कङ्कालग्रहा बालग्रहा अपि ॥
वातपित्तादिजनितास्तथा च विषमज्वरा: ।
दूरादेव पलायन्ते श्रुत्वा स्तुतिमिमां शुभाम् ॥
वज्रपञ्जरनामैतत्स्तोत्रं दुर्गाप्रशंसनम् ।
एतत्स्तोत्रकृतत्राणे वज्रादपि भयं न हि ॥
अष्टजप्तेन चानेन योऽभिमन्त्र्य जलं पिबेत् ।
तस्योदरगतापीडा क्वाऽपि नो सम्भविष्यति ॥
गर्भपीडा तु नो जातु भविष्यत्यभिमन्त्रणात् ।
बालानां परमा शान्तिरेतत्स्तोत्राम्बुपानत: ॥
यत्र सान्निध्यमेतस्य स्तवस्येह भविष्यति ।
एतास्तु शक्तय: सर्वा: सर्वत्र सहिता मया ॥
रक्षां परिकरिष्यन्ति मद्भक्तानां ममाज्ञया ।
इति दत्त्वा वरान्देवी देवेभ्योऽन्तर्हिता तदा ।
तेऽपि स्वर्गौकस: सर्वे स्वं स्वं स्वर्गं ययुर्मुदा ॥

(स्क० महापु० काशी० ७२।३७-५०)

## २. युधिष्ठिरकृता देवीस्तुतिः

देवि पूज्ये महाशक्ते कृष्णस्य भगिनि प्रिये ।
नत्वा त्वां शरणं यामि मनोवाक्कायकर्मभिः ॥
सङ्कर्षणाभयदाने कृष्णच्छविसमप्रभे ।
एकानंशे महादेवि पुत्रवत्त्राहि मां शिवे ॥
त्वया ततमिदं विश्वं जगदव्यक्तरूपया ।
इति मत्वा त्वां गतोऽस्मि शरणं त्राहि मां शिवे ॥
कार्यारम्भेषु सर्वेषु सानुगेन मया तव ।
स्व आत्मा कल्पितो भद्रे ज्ञात्वैतदनुकम्प्यताम् ॥
( स्क० महापु० माहेश्वर० ६५।१-६ )

## ३. भीमकृता देवीस्तुतिः

सर्वभूताम्बिके देवि ब्रह्माण्डशतपूरके ।
बालिशं बालकं स्वीयं त्राहि त्राहि नमोऽस्तु ते ॥
त्वं ब्राह्मी ब्रह्मणः शक्तिर्वैष्णवी त्वं च शाम्भवी ।
त्रिमूर्त्तिः शक्तिरूपा त्वं रक्ष रक्ष नमोऽस्तु ते ॥
त्वमैन्द्री च त्वमाग्नेयी त्वं याम्या त्वं च नैर्ऋती ।
त्वं वारुणी त्वं वायव्या त्वं कौबेरी नमोऽस्तु ते ॥
ऐशानि देवि वाराहि नारसिंहि जयप्रदे ।
कौमारि कुलकल्याणि कृपेश्वरि नमोऽस्तु ते ॥
त्वं सूर्ये त्वं तथा सोमे त्वं भौमे त्वं बुधे गुरौ ।
त्वं शुक्रे त्वं स्थिता राहौ त्वं केतुषु नमोऽस्तु ते ॥
वचसि ध्रुवचक्रे त्वं मुनिचक्रे च ते स्थितिः ।
भचक्रेषु खचक्रेषु भूचक्रे च नमोऽस्तु ते ॥
सप्तद्वीपेषु त्वं देवि समुद्रेषु च सप्तसु ।
सप्तस्वपि च पातालेष्ववस्थे नमोऽस्तु ते ॥
त्वं देवि चाऽवतारेषु विष्णोः साहाय्यकारिणी ।
विष्णुनाऽभ्यर्थ्यसे तस्मात्त्राहि मातर्नमोऽस्तु ते ॥
चतुर्भुजे चतुर्वक्त्रे फलदे चत्वरप्रिये ।
चराचरस्तुते देवि चरणौ प्रणमामि ते ॥

महाघोरे कालरात्रि घण्टाळि विकटोज्ज्वले।
सततं सप्तमीपूज्ये नेत्रदे शरणं भव॥

मेरुवासिनि पिङ्गाक्षि नेत्रत्राणैककारिणि।
हुँहुङ्कारध्वस्तदैत्ये शरण्ये शरणं भव॥

महानादे महावीर्ये महामोहविनाशिनि।
महाबन्धापहे देवि देहि नेत्रत्रयं मम॥

सर्वमङ्गलमङ्गल्या यदि त्वं सत्यतोऽम्बिके।
ततो मे मङ्गलं देहि नेत्रदानान्नमोऽस्तु ते॥

यदि सर्वकृपालुभ्यः सत्यतस्त्वं कृपावती।
ततः कृपां कुरु मयि देहि नेत्रे नमोऽस्तु ते॥

पापोऽयमिति यद्देवि प्रकुप्यसि वृथैव तत्।
त्वं मां मोहयसि त्वेवं न ते तत्कि नमोऽस्तु ते॥

स्वयमुत्पाद्य यो रेणुं वेष्टितस्तेन कुप्यति।
तथा कुप्यसि मे मातरनाथस्याऽस्य दर्शय॥

(स्क० महापु० माहेश्वर० कुमारिका० ६५।५१-६६)

## ४. वैष्णवीमहाविद्यासाधनवर्णनम्

ॐ नमो भगवते वासुदेवाय नमोऽनन्ताय सहस्रशीर्षाय क्षीरोदार्णवशायिने शेषभोगपर्यङ्काय गरुडवाहनाय पीतवाससे वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धहयशिरो-वराह-नरसिंह-वामन-त्रिविक्रम-राम-रामवरप्रद नमोऽस्तु ते, नमोऽस्तु ते।

असुरदैत्यदानवयक्षराक्षसभूतप्रेतपिशाचकुम्भाण्डसिद्धयोगिनीडाकिनीस्कन्दपुरोगमान्ग्रहान्नक्षत्रग्रहांश्चान्यांश्च हन हन दह दह पच पच मथ मथ विध्वंसय विध्वंसय विद्रावय विद्रावय शङ्खेन चक्रेण वज्रेण गदया मुशलेन हलेन भस्मीकुरु।

सहस्रबाहवे सहस्रचरणायुध जय जय विजय विजय अपराजित अप्रतिहत सहस्रनेत्र ज्वल ज्वल प्रज्वल प्रज्वल।

विश्वरूप बहुरूप मधुसूदन महावराह महापुरुष वैकुण्ठनारायणाय पद्मनाभ गोविन्द दामोदर हृषीकेश सर्वासुरोत्सादन सर्वभूतवशङ्कर सर्वदुःखप्रभेदेन सर्वयन्त्रप्रभञ्जन सर्वनागप्रमर्दन सर्वदेवमहेश्वर सर्वबन्धविमोक्षण सर्वाहितप्रमर्दन सर्वज्वर-

प्रणाशन सर्वग्रहनिवारण सर्वपापप्रशमन जनार्दन जनानन्दकर नमोऽस्तु ते स्वाहा ।

इमामपराजितां परमवैष्णवीं महाविद्यां जपति पठति शृणोति स्मरति धारयति कीर्तयति न च तस्य वाय्वग्निवज्रोपलाशनिवर्षभयं न समुद्रभयं न ग्रहभयं न च चौरभयं न च श्वापदभयं वा भवेत् ।

क्वचिद्रात्र्यन्धकारस्त्रीराजकुलविषोपविषगरदवशीकरणविद्वेषणोच्चाटनवधबन्धभयं वा न भवेदेतैर्मन्त्रपदैरुदाहृतैर्हृदा वद्धैः संसिद्धपूजितैः ।

तद्यथा नमो नमस्तेऽस्तु अभये अनघे अजिते अत्रसिते अमृते अपराजिते पठितसिद्धे स्मरितसिद्धे एकानंशे उभे ध्रुवे अरुन्धति सावित्रि गायत्रि जातवेदसि मानस्तोके सरसि सरस्वति धरणि धारिणि सौदामिनि अदिते विनते गौरिगान्धारि मातङ्गि कृष्णे यशोदे सत्यवादिनि ब्रह्मवादिनि कालि कपालिनि सद्योवयवचनकरि स्थलगतं जलगतमन्तरिक्षगतं वा रक्ष रक्ष सर्वभूतभयोपद्रवेभ्यो रक्ष रक्ष स्वाहा ।

यस्याः प्रणश्यते पुष्प
गर्भो वा पतते यदि ।
म्रियन्ते बालका यस्याः
काकबन्ध्या च या भवेत् ॥

धारयेत इमां विद्यामेभिर्दोषैर्न लिप्यते ॥
रणे राजकुले द्यूते नित्यं तस्य जयो भवेत् ।
शस्त्रं धारयते ह्येषां समरे काण्डधारिणी ॥
गुल्मशूलाक्षिरोगाणां नित्यं नाशकरी तथा ।
शिरोरोगज्वराणां च नाशिनी सर्वदेहिनाम् ॥

हन हन कालि सर सर कालि सर सर गौरि धम धम गौरि धम धम गौरि धम धम विद्ये आले ताले माले गन्धे बन्धे पच पच विद्ये नाशय पापं हन दुःस्वप्नं विनाशय कष्टनाशिनि रजनि सन्ध्ये दुन्दुभिनादे मानसवेगे शङ्खिनि चक्रिणि वज्रिणि शूलिनि अपमृत्युविनाशिनि विश्वेश्वरि द्रविडि द्राविडी केशवदयिते पशुपतिमहिते दुर्दमदमिनि शर्वरि किराति मातङ्गि ॐ

ह्रां ह्लँ ह्लँ ह्लँ क्रां क्रँ क्रँ क्रँ त्वर त्वर। ये मां द्विषन्ति प्रत्यक्षं परोक्षं वा सर्वान्दम दम मर्द् मर्द् तापय तापय शोषय शोषय उत्सादय उत्सादय, ब्रह्माणि माहेश्वरि वाराहि विनायकि ऐन्द्रि आग्नेयि चामुण्डे वारुणि प्रचण्डविद्योते इन्द्रोपेन्द्र-भगिनि विजये शान्तिस्वस्तिपुष्टिविवर्धिनि कामांकुशे कामदुघे सर्वकामवरप्रदे सर्वभूतेषु वासिनि प्रति विद्यां कुरु कुरु, आकर्षिणि वेशिनि ज्वालामालिनि रमणि रामणि धरणि धारिणि मानोन्मानिनि रक्ष रक्ष, वायव्ये ज्वालामालिनि तापनि शोषणि नीलपताकिनि महागौरि महाश्रये महामयूरि आदित्यरश्मि जाह्नवि यमघण्टे किणि किणि, चिन्तामणि सुरभि सुरोत्पन्ने कामदुघे यथा मनीषितं कार्यं तन्मम सिध्यतु स्वाहा, ॐ स्वाहा, ॐ भूः स्वाहा, ॐ भुवः स्वाहा, ॐ स्वः स्वाहा, ॐ भूर्भुवः स्वः स्वाहा, यत्रैवाऽऽगतं पापं तत्रैव प्रति-गच्छतु स्वाहा, ॐ बले महाबले असिद्धसाधिनि स्वाहा।

इतीमां साधयामास वैष्णवीमपराजिताम्।
विजयः संयतो भूत्वा मनोबुद्धिसमाधिभिः॥
य इमां पठते नित्यं साधनेन विनाऽपि च।
तस्याऽपि सर्वविघ्नानि नश्यन्ति द्विजपुङ्गवाः॥

(स्क० महापु० कुमा० ६२।५३-६२)

## ५. इन्द्रद्युम्नकृता सुभद्रास्तुतिः

(क) जय देवि जगन्मातः प्रसीद परमेश्वरि॥
कार्यकारणकर्त्री त्वं सर्वशक्त्यै नमोऽस्तु ते।
सर्वस्य हृदि संविष्टे ज्ञानमोहात्मिके सदा॥
कैवल्यमुक्तिदे भद्रे त्वां नमामि सुरारणिम्।
देवि त्वं विष्णुमायासि मोहयन्ती चराचरम्॥
हृत्पद्मासनसंस्थासि विष्णुभावानुसारिणी।
त्वमेव लक्ष्मीर्गौरी च शची कात्यायनी तथा॥
यच्च किञ्चित्क्वचिद्वस्तु सदसद्वाखिलात्मिके।
तस्य सर्वस्य शक्तिस्त्वं स्तोतुं त्वां कस्तु शक्तिमान्॥
जय भद्रे सुभद्रे त्वं सर्वेषां भद्रदायिनि।
भद्राभद्रस्वरूपे त्वं भद्रकालि नमोऽस्तु ते॥

त्वं माता जगतां देवि पिता नारायणो हि सः ।
स्त्रीरूपं त्वं सर्वमेव पुंरूपो जगदीश्वरः ॥
युवयोर्न हि भेदोऽस्ति नास्त्यन्यत्परमेव हि ।
यथा वयं नियुक्ता हि त्वया वै विष्णुमायया ॥
निदेशकारिणो नित्यं भ्रमामः परमेश्वरि ।
वृत्तिः प्रवृत्तिः परमा क्षुधा निद्रा त्वमेव च ॥
आशा त्वमाशापूर्णा च सर्वाशापरिपूरिका ।
मुक्तिहेतुस्त्वमेवेशि बन्धहेतुस्त्वमेव हि ॥
सर्वज्ञानप्रदे नित्ये भक्तानां कल्पवल्लरी ।
त्राहि पादाब्जनम्रं मां कृपापाङ्गविलोकनैः ॥
(स्क० महापु० वैष्णव० २।२७।५२-६२)

(ख) जय देवि महादेवि प्रसीद भवतारिणि ॥
सुखारणि श्रितवतां जय संतुष्टिकारिणि ।
कार्यं कार्यस्वरूपाणां कारणानां च कारणम् ।
धारणं धार्यमाणानां त्वामादि प्रणमाम्यहम् ।
वक्षःस्थलस्थितां विष्णोः शम्भोरर्द्धाङ्गधारिणीम् ॥
पद्मयोनिमुखाब्जस्थां प्रणमामि जगत्प्रियाम् ।
सृष्टिस्थितिविनाशादिकर्मणां परमात्मनः ॥
त्वमेका शक्तिरतुला त्वां विना सोऽपि नेश्वरः ।
त्वां सर्वलोकजननीं विष्णुमायां तपस्विनीम् ॥
सुभद्रां भद्ररूपां तां मूलभूतां नमाम्यहम् ॥
(स्क० महापु० वैष्णव० २।३०।५६-६१)

## ६. देवादिकृतश्रीलक्ष्मीस्तुतिः

नमः श्रियै लोकधात्र्यै ब्रह्ममात्रे नमो नमः ।
नमस्ते पद्मनेत्रायै पद्ममुख्यै नमो नमः ॥
प्रसन्नमुखपद्मायै पद्मकान्त्यै नमो नमः ।
नमो बिल्ववनस्थायै विष्णुपत्न्यै नमो नमः ॥
विचित्रक्षौमधारिण्यै पृथुश्रोण्यै नमो नमः ।
पक्वबिल्वफलापीनतुङ्गस्तन्यै नमो नमः ॥

सुरक्तपद्मपत्राभकरपादतले शुभे ।
सुरत्नाङ्गदकेयूरकाञ्चीनपुरशोभिते ॥
यक्षकर्दमसंलिप्तसर्वाङ्गे कटकोज्ज्वले ॥
माङ्गल्याभरणैश्चित्रैर्मुक्ताहारैर्विभूषिते ।
ताटङ्कैरवतंसैश्च शोभमानमुखाम्बुजे ॥
पद्महस्ते नमस्तुभ्यं प्रसीद हरिवल्लभे ।
ऋग्यजुःसामरूपायै विद्यायै ते नमो नमः ॥
प्रसीदास्मान्कृपादृष्टिपातैरालोकयाब्धिजे ।
ये दृष्टास्ते त्वया ब्रह्मरुद्रेन्द्रत्वं समाप्नुयुः ॥

( स्क० महापु० वैष्णव० १।९।९९-१०५ )

## ७. पुण्यनिधिकृता लक्ष्मीस्तुतिः

नमो देवि जगद्धात्रि विष्णुवक्षस्थलालये ॥
नमोऽब्धिसम्भवे तुभ्यं महालक्ष्मि हरिप्रिये ।
सिद्ध्यै पुष्ट्यै स्वधायै च स्वाहायै सततं नमः ॥
सन्धायै च प्रभायै च धात्र्यै भूत्यै नमो नमः ।
श्रद्धायै चैव मेधायै सरस्वत्यै नमो नमः ॥
यज्ञविद्ये महाविद्ये गुह्यविद्येति शोभने ।
आत्मविद्ये च देवेशि मुक्तिदे सर्वदेहिनाम् ॥
त्रयीरूपे जगन्मातर्जगद्रक्षाविधायिनि ।
रक्ष मां त्वं कृपादृष्ट्या सृष्टिस्थित्यन्तकारिणि ॥
भूयो भूयो नमस्तुभ्यं ब्रह्ममात्रमहेश्वरि ॥

× × ×

त्वत्कृतं यदिदं स्तोत्रं मम लक्ष्म्या विशाम्पते ।
ये पठन्ति च शृण्वन्ति लिखन्ति च मुदान्विताः ॥
न तेषां पुनरावृत्तिर्मम लोकात्कदाचन ।

( स्क० महापु० ब्रह्म० १।५०।६९-७४, १०५-१०६ )

## ८. अगस्तिकृता लक्ष्मीस्तुतिः

मातर्नमामि कमले कमलायताक्षि
श्रीविष्णुहृत्कमलवासिनि विश्वमातः ।
क्षीरोदजे कमलकोमलगर्भगौरि
लक्ष्मि प्रसीद सतत नमतां शरण्ये ॥

त्वं श्रीरुपेन्द्रसदने मदनैकमात-
र्ज्योत्स्नासि चन्द्रमसि चन्द्रमनोहरास्ये ।
सूर्ये प्रभाऽसि च जगत्त्रितये प्रभासि
लक्ष्मि प्रसीद सततं नमतां शरण्ये ॥

त्वं जातवेदसि सदा दहनात्मशक्ति-
र्वेधास्त्वयाजगदिदं विविधं विदध्यात् ।
विश्वम्भरोऽपि बिभृयादखिलं भवत्या
लक्ष्मि प्रसोद सततं नमतां शरण्ये ॥

त्वत्त्यक्तमेतदमले हरते हरोऽपि
त्वं पासि हंसि विदधासि परावरासि ।
ईड्यो बभूव हरिरप्यमले त्वदाप्या
लक्ष्मि प्रसीद सततं नमतां शरण्ये ॥

शूरः स एव स गुणी स बुधः स धन्यो
मान्यः स एव कुलशीलकलाकलापैः ।
एकः शुचिः स हि पुमान् सकलोऽपि लोके
यत्रापतेत्तव शुभे करुणाकटाक्षः ॥

यस्मिन्वसेः क्षणमहो पुरुषे गजेऽश्वे
स्त्रैणे तृणे सरसि देवकुले गृहेऽन्ने ।
रत्ने पतत्त्रिणि पशौ शयने धरायां
सश्रीकमेव सकले तदिहास्ति नान्यत् ॥

त्वत्स्पृष्टमेव सकलं शुचितां लभेत
त्वत्त्यक्तमेव सकलं त्वशुचीह लक्ष्मि ।
त्वन्नाम यत्र च सुमङ्गलमेव तत्र
श्रीविष्णुपत्नि कमले कमलालयेऽपि ॥

लक्ष्मीं श्रियञ्च कमलां कमलालयाञ्च
पद्मां रमां नलिनयुग्मकराञ्च माञ्च ।
क्षीरोदजाममृतकुम्भकरामिराञ्च
विष्णुप्रियामिति सदा जपतां क्व दुःखम् ॥

इति स्तुत्वा भगवतीं महालक्ष्मीं हरिप्रियाम्
प्रणनाम सपत्नीकः साष्टाङ्गं दण्डवन्मुनिः ॥

× × ×

एतत्स्तोत्रस्य पठनं मम सान्निध्यकारणम् ॥
अलक्ष्मीः कालकर्णी च तद्गेहे न विशेत्क्वचित् ।
गजाश्वपशुशान्त्यर्थमेतत्स्तोत्रं सदा जपेत् ॥
बालंग्रहाभिभूतानां बालानां शान्तिकृत्परम् ।
भूर्जपत्रे लिखित्वा तु बध्नीयात्कण्ठदेशतः ॥
इदं बीजरहस्यं मे रक्षणीयं प्रयत्नतः ।
श्रद्धाहीने न दातव्यं न देयञ्चाशुचौ क्वचित् ॥

(स्क० महापु० काशी० ५।८०-१०४)

## ९. देवैः कृता मूलप्रकृतिस्तुतिः

यदुद्भवाः सत्त्वरजस्तमोगुणाः
सर्गस्थितिध्वंसनिदानकारिणः ।
यदिच्छया विश्वमिदं भवाऽभवौ
तनोति मूलप्रकृतिं नताः स्म ताम् ॥
या हि त्रयोविंशति भेदशब्दिता
जगत्यशेषे समधिष्ठिता परा ।
यद्रूपकर्माणि जडास्त्रयोऽपि
देवा न विद्युः प्रकृतिं नताः स्म ताम् ॥
यद्भक्तियुक्ताः पुरुषास्तु नित्यं
दारिद्र्य भीमोहपरा भवादीन् ।
न प्राप्नुवन्त्येव हि भक्तवत्सलां
सदैव मूलप्रकृतिं नताः स्म ताम् ॥

× × ×

स्तोत्रमेतत्त्रिसन्ध्यं यः पठेदेकाग्रमानसः ।
दारिद्र्यमोहदुःखानि न कदाचित्स्पृशन्ति तम् ॥

(स्क० महापु० वैष्णव० ४।२२।१९-२२)

## १०. हनुमत्कृता सीतास्तुतिः

जानकि त्वान्नमस्यामि सर्वपापप्रणाशिनीम् ।
दारिद्र्यरणसंहर्त्रीं भक्तानामिष्टदायिनीम् ॥

विदेहराजतनयां राघवानन्दकारिणीम् ।
भूमेर्दुहितरं विद्यां नमामि प्रकृतिं शिवाम् ॥

पौलस्त्यैश्वर्यसंहर्त्रीं भक्ताभीष्टां सरस्वतीम् ।
पतिव्रताधुरीणां त्वां नमामि जनकात्मजाम् ॥

अनुग्रहपरामृद्धिमनघां हरिवल्लभाम् ।
आत्मविद्यात्रयीरूपामुमारूपां नमाम्यहम् ॥

प्रसादाभिमुखीं लक्ष्मीं क्षीराब्धितनयां शुभाम् ।
नमामि चन्द्रभगिनीं सीतां सर्वाङ्गसुन्दरीम् ॥

नमामि धर्मनिलयां करुणां वेदमातरम् ।
पद्मालयां पद्महस्तां विष्णुवक्षस्थलालयाम् ॥

नमामि चन्द्रनिलयां सीतां चन्द्रनिभाननाम् ।
आह्लादरूपिणीं सिद्धिं शिवां शिवकरीं सतीम् ॥

नमामि विश्वजननीं रामचन्द्रेष्टवल्लभाम् ।
सीतां सर्वानवद्याङ्गीं भजामि सततं हृदा ॥

( स्क० महापु० ब्रह्म० १।४६।५०-५८ )

## ११. विष्णुकृता पार्वतीस्तुतिः

महाव्रते महादेवि महादेवप्रिये सदा ।
त्वं हि सत्त्वरजः स्याच्च तामसी शक्तिरुत्तमा ॥

मात्रात्रयसमोपेता गुणत्रयविभाविनी ।
मायादीनां जनित्री त्वं विश्वव्यापकरूपिणी ॥

वेदत्रयस्तुता त्वं च साध्यारूपेण रागिणी ।
अरूपा सर्वरूपा त्वं जनसन्तानदायिनी ॥

फलवेला महाकाली महालक्ष्मीः सरस्वती ।
ॐकारश्च वषट्कारस्त्वमेव हि सुरेश्वरी ॥

भूतदात्रि नमस्तेऽस्तु शिवायै च नमोऽस्तु ते ।
रागिण्यै च विरागिण्यै विकराले नमः शुभे ॥

एवं स्तुता प्रसन्नाक्षी प्रसन्नेनान्तरात्मना ।
उवाच परमोदारं मिथ्यारोषयुतं वचः ॥
मच्छापो नान्यथाभावी जनार्दन तवाऽव्ययम् ।
तत्राऽपि संस्थितस्त्वं हि योगीश्वरविमुक्तिदः ॥

( स्क० महापु० ब्रह्म० ३।१९।१८-२४ )

## १२. देवैः कृता पार्वतीस्तुतिः

त्वं माता सर्वदेवानां सर्वसाक्षी सनातना ।
उत्पत्तिस्थितिसंहारकारणं जगतां सदा ॥
भूतप्रकृतिरूपा त्वं महाभूतसमाश्रिता ।
अपर्णा तपसां धात्री भूतधात्री वसुन्धरा ॥

मन्त्राराध्या मन्त्रबीजं विश्वबीजलया स्थितिः ।
यज्ञादिफलदात्री च स्वाहारूपेण सर्वदा ॥
मन्त्रयन्त्रसमोपेता ब्रह्मविष्णुशिवादिषु ।
नित्यरूपा महारूपा सर्वरूपा निरञ्जना ॥

दोषत्रयसमाक्रान्तजननैः श्रेयसप्रदा ।
महालक्ष्मीर्महाकाली महादेवी महेश्वरी ॥
विश्वेश्वरी महामाया मायाबीजवरप्रदा ।
वररूपा वरेण्या त्वं वरदात्री वरासुता ॥

बिल्वपत्रैः शुभैर्ये त्वां पूजयन्ति नराः सदा ।
तेषां राज्यप्रदात्री च कामदा सिद्धिदा सदा ॥
चातुर्मास्येऽर्चिता यैस्त्वं बिल्वपत्रैर्विशेषतः ।
तेषां वाञ्छितसिद्ध्यर्थं जाता कामदुघा स्वयम् ॥
येऽर्चयन्ति सदा लोके महेश्वर समन्विताम् ।
बिल्वपत्रैर्महाभक्त्या न तेषां दुःखदुष्कृती ॥

चातुर्मास्ये विशेषेण तव पूजा महाफला ।
अद्यप्रभृति यैर्लोकैर्बिल्वपत्रैस्तु पूजिता ॥
विधास्यसि महेशानि तेषां ज्ञानमनुत्तमम् ।
चातुर्मास्येऽधिकफलं बिल्वपत्रं वरानने ॥

उमामहेश्वरप्रीत्यै दत्तं विधिवदक्षयम् ।
यथा श्रीस्तुलसीवृक्षे तथा बिल्वे च पार्वती ॥
त्वं मूर्त्या दृश्यसे विश्वं सकलाभीष्टदायिनी ।
चातुर्मास्ये विशेषेण सेवितौ द्वौ महाफलौ ॥

( स्क० महापु० ब्रह्म० ३।१४।२५-३७ )

## १३. विप्रैः कृता श्रीमातास्तुतिः

नमस्ते ब्रह्मपुत्र्यास्तु नमस्ते ब्रह्मचारिणि ।
नमस्ते जगतां मातर्नमस्ते सर्वगे सदा ॥

क्षुन्निद्रा त्वं तृषा त्वं च क्रोधतन्द्रादयस्तथा ।
त्वं शान्तिस्त्वं रतिश्चैव त्वं जया विजया तथा ॥

ब्रह्मविष्णुमहेशाद्यैस्त्वं प्रपन्ना सुरेश्वरि ।
सावित्री श्रीरुमा चैव त्वं च माता व्यवस्थिताः ।
नमस्तुभ्यं जगन्मातर्धृतिपुष्टिस्वरूपिणि ॥

रतिः क्रोधा महामाया छायाज्ज्योतिःस्वरूपिणि ।
सृष्टिस्थित्यन्तकृद्देवि कार्यकारणदा सदा ॥

धरातेजस्तथा वायुः सलिलाकाशमेव च ।
नमस्तेऽस्तु महाविद्ये महाज्ञानमयेऽनघे ॥

ह्रींकारी देवरूपा त्वं क्लींकारी त्वं महाद्युते ।
आदिमध्यावसाना त्वं त्राहि चास्मान्महाभयात् ॥

महापापो हि दुष्टात्मा दैत्योऽयं बाधतेऽधुना ।
त्राणरूपा त्वमेका च अस्माकं कुलदेवता ॥

त्राहि त्राहि महादेवि रक्ष रक्ष महेश्वरि ।
हन हन दानवं दुष्टं द्विजानां विघ्नकारकम् ॥

एवं स्तुता तदा देवी महामाया द्विजन्मभिः ।
कर्णाटस्य बधार्थाय द्विजातीनां हिताय च ॥
प्रत्यक्षा साऽभवत्तत्र वरं ब्रूहीत्युवाच ह ॥

( स्क० महापु० ब्रह्म० २।१८।४०-४६ )

## १४. अगस्त्यकृता विन्ध्यवासिनीस्तुतिः

कंसविद्रावणकरीमसुराणां क्षयकरीम् ।
भारावतारिणीं पुण्यां बलस्य भगिनीं शुभाम् ॥

यशोदागर्भसम्भूतां चाणूरबलमर्दिनीम् ।
विद्युद्रूपां नभस्थां तु कृष्णां कृष्णाहिमर्दिनीम् ॥

जननीं देवसेनस्य कवीनां वाक्यदेवताम् ।
गायत्रीं द्विजमुख्यानां बृहतीं छन्दसां वराम् ॥
सहस्राक्षीं सुरेन्द्रस्य ऋषेश्चारुन्धतीं पराम् ।
गवां कामदुघां श्यामां लतां मधुतमप्रियाम् ॥

अदितिं सर्वमातॄणां पार्वतीं सर्वयोषिताम् ।
ज्योत्स्नाश्चान्द्रमसीं बालां सर्वकामवरप्रदाम् ॥
शारदां क्रतुवेलायां वृन्दावनचरीं वराम् ।
मायिनां वैष्णवीं मायां सर्वदैत्यविमोहिनीम् ॥
महालक्ष्मीं श्रीमभीष्टां यक्षिणीं धनदार्चिताम् ।
महोदधीप्सितां वेलां राज्ञां कार्येषु चक्रिणीम् ॥
वेदिकां यज्ञशालानां वराहस्यावनीं शुभाम् ।
दक्षिणां सर्वदीक्षाणां सर्वकामफलप्रदाम् ॥

× × ×

एवं स्तुता तदा देवी प्रत्यक्षा विन्ध्यवासिनी ।
प्राह प्रसादसुमुखी ऋषीणां प्रवरं ऋषिम् ॥
व्रियतां भो द्विजश्रेष्ठ तदस्मत्तोऽभिवाञ्छितम् ।
यदीप्सितं त्वया वत्स स्तुतिर्मे सुचिरं कृता ॥

(स्क० महापु० अवन्ती० ६६।५-१४)

## १५. गरुडकृता चामुण्डास्तुतिः (कनकेश्वरीस्तोत्रम्)

ॐ या सा क्षुत्क्षामकण्ठा नवरुधिरमुखा प्रेतपद्मासनस्था
भूतानां वृन्दवृन्दैः पितृवननिलया क्रीडते शूलहस्ता ।
शस्त्रध्वस्तप्रवीरव्रजरुधिरगलन्मुण्डमालोत्तरीया
देवी श्रीवीरमाता विमलशशिनिभा पातु वश्चर्ममुण्डा ॥
या सा क्षुत्क्षामकण्ठा विकृतभयकरी त्रासिनी दुष्कृतानां
मुञ्च ज्वालाकलापैर्दशनकसमसैः खादति प्रेतमांसम् ।
पिङ्गोर्ध्वोद्बद्धजूटारविसदृशतनुर्व्याघ्रचर्मोत्तरीया
दैत्येन्द्रैर्यक्षरक्षोऽप्सरसुरनमिता पातुवश्चर्ममुण्डा ॥
या सा दोर्दण्डचण्डैर्डमरुरणरणाटोपटङ्कारघण्टैः
कल्पान्तोत्पातवाताहतपटुपटहैर्वल्गते भूतमाता ।
क्षुत्क्षामा शुष्ककुक्षिः खरतरनखरैः क्षोदति प्रेतमांसं
मुञ्चन्ती चाट्टहासं घुरघुरितरवा पातु वश्चर्ममुण्डा ॥
या सा निम्नोदराभा विकृतभवभयत्रासिनी शूलहस्ता
चामुण्डा मुण्डधाता रणरुणितरणज्झल्लरीनादरम्या ।
त्रैलोक्यं त्रासयन्ती ककहकहकहैर्घोररावैरनेकै-
र्नृत्यन्ती मातृमध्ये पितृवननिलया पातु वश्चर्ममुण्डा ॥

या धत्ते विश्वमखिलं निजांशेन महोज्ज्वला।
कनकप्रसवे लीना पातु मां कनकेश्वरी॥

हिमाद्रिसम्भवा देवी दयार्दशितविग्रहा।
शिवप्रिया शिवे सक्ता पातु मां कनकेश्वरी॥

अनादिजगदादिर्या रत्नगर्भा वसुप्रिया।
रथाङ्गपाणिना पद्मा पातु मां कनकेश्वरी॥

सावित्री या च गायत्री मृडानी वागथेन्दिरा।
स्मर्तॄणां या सुखं दत्ते पातु मां कनकेश्वरी॥

सौम्यासौम्यैः सदा रूपैः सृजत्यवति या जगत्।
परा शक्तिः परा बुद्धिः पातु मां कनकेश्वरी॥

ब्रह्मणः सर्गसमये सृज्यशक्तिः परा तु या।
जगन्माया जगद्धात्री पातु मां कनकेश्वरी॥

विश्वस्य पालने विष्णोर्या शक्तिः परिपालिता।
मदनोन्मादिनी मुख्या या रुद्रेण समाश्रिता।
रौद्री शक्तिः शिवाऽनन्ता पातु मां कनकेश्वरी॥

कैलाससानुसंरूढकनकप्रसवेशया।
भस्मकाभिहुता पूर्वं पातु मां कनकेश्वरी॥

पतिप्रभावमिच्छन्ती सक्ता रक्षिता कनकेन या।
आब्रह्मस्तम्बजननी पातु मां कनकेश्वरी॥

ब्रह्मविष्णवीश्वराः शक्त्या शरीरग्रहणं यया।
प्रापिता प्रथमा शक्तिः पातु मां कनकेश्वरी॥

× × ×

श्रुत्वा तु गरुडेनोक्तं देवीवृत्तचतुष्टयम्।
प्रसन्ना सम्मुखी भूत्वा वाक्यमेतदुवाच ह॥

प्रसन्ना ते महासत्त्व वरं वरय वाञ्छितम्।
ददामि ते द्विजश्रेष्ठ यत्ते मनसि रोचते॥

अजरश्चामरश्चैव अधृष्यश्च सुरासुरैः।
तव प्रसादाच्चैवान्यैरजेयश्च भवाम्यहम्।
त्वया चाऽत्र सदा देवि स्थातव्यं तीर्थसन्निधौ।

एवं भविष्यतीत्युक्त्वा देवी देवैरभिष्टुता।
जगामाकाशमाविश्य भूतसङ्घसमन्विता॥

( स्क० महापु० रेवाख० १८६।१६-३६ )

## १६. नानादेवीस्थानस्थितिवर्णनम् ( शक्तिपीठाः )

सर्वगा सर्वभूतेषु द्रष्टव्या सर्वतो भुवि ।
सर्वलोकेषु यत्किञ्चिद्विहितं न मया विना ॥
तथापि येषु स्थानेषु द्रष्टव्या सिद्धिमीप्सुभिः ।
स्मर्त्तव्या भूतिकामेन तानि वक्ष्यामि तत्त्वतः ॥

× × × × ×

वाराणस्यां विशालाक्षी नैमिषे लिङ्गधारिणी ।
प्रयागे ललिता देवी कामुका गन्धमादने ॥
मानसे कुमुदा नाम विश्वकाया तथाऽपरे ।
गोमन्ते गोमती नाम मन्दरे कामचारिणी ॥
मदोत्कटा चैत्ररथे हयन्ती हास्तिने पुरे ।
कान्यकुब्जे स्थिता गौरी रम्भा ह्यमलपर्वते ॥
एकाम्रके कीर्त्तिमती विश्वां विश्वेश्वरे विदुः ।
पुष्करे पुरुहूता च केदारे मार्गदायिनी ॥
नन्दा हिमवतः प्रस्थे गोकर्णे भद्रकर्णिका ।
स्थानेश्वरे भवानी तु बिल्वके बिल्वपत्रिका ॥
श्रीशैले माधवी नाम भद्रे भद्रेश्वरीति च ।
जया वराहशैले तु कमला कमलालये ॥
रुद्रकोट्यां तु कल्याणी काली कालञ्जरे तथा ।
महालिङ्गे तु कपिला माकोटे मुकुटेश्वरी ॥
शालिग्रामे महादेवी शिवलिङ्गे जलप्रिया ।
मायापुर्यां कुमारी तु सन्ताने ललिता तथा ॥
उत्पलाक्षी सहस्राक्षे हिरण्याक्षे महोत्पला ।
गयायां विमला नाम मङ्गला पुरुषोत्तमे ॥
विपाशायाममोघाक्षी पाटला पुण्ड्रवर्धने ।
नारायणी सुपार्श्वे तु त्रिकूटे भद्रसुन्दरी ॥
विपुले विपुला नाम कल्याणी मलयाचले ।
कोटवी कोटितीर्थेषु सुगन्धा गन्धमादने ॥
गोदाश्रमे त्रिसन्ध्या तु गङ्गाद्वारे रतिप्रिया ।
शिवचण्डे सभानन्दा नन्दिनी देविकातटे ॥

रुक्मिणी द्वारवत्यां तु राधा वृन्दावने वने ।
देवकी मथुरायां तु पाताले परमेश्वरी ॥
चित्रकूटे तथा सीता विन्ध्ये विन्ध्यनिवासिनी ।
सह्याद्रावेकवीरा तु हरिश्चन्द्रे तु चण्डिका ॥
रमणा रामतीर्थे तु यमुनायां मृगावती ।
करवीरे महालक्ष्मी रूपादेवी विनायके ॥
आरोग्या वैद्यनाथे तु महाकाले महेश्वरी ।
अभयेत्युष्णतीर्थे तु मृगी वा विन्ध्यकन्दरे ॥
माण्डव्ये माण्डुकी नाम स्वाहा माहेश्वरे पुरे ।
छागलिङ्गे प्रचण्डा तु चण्डिकाऽमरकण्टके ॥
सोमेश्वरे वरारोहा प्रभासे पुष्करावती ।
वेदमाता सरस्वत्यां पारा पारातटे मुने ॥
महालये महाभागा पयोष्ण्यां पिङ्गलेश्वरी ।
सिंहिका कृतशौचे तु कार्त्तिके चैव शाङ्करी ॥
उत्पलावर्त्तके लोला सुभद्रा शोणसङ्गमे ।
मता सिद्धवटे लक्ष्मीस्तरङ्गा भारताश्रमे ॥
जालन्धरे विश्वमुखी तारा किष्किन्धपर्वते ।
देवदारुवने पुष्टिर्मेधा काश्मीरमण्डले ॥
भीमादेवी हिमाद्रौ तु पुष्टिर्वस्त्रेश्वरे तथा ।
कपालमोचने शुद्धिर्माता कायावरोहणे ॥
शङ्खोद्धारे ध्वनिर्नाम धृतिः पिण्डारके तथा ।
काला तु चन्द्रभागायामच्छोदे शक्तिधारिणी ॥
वेणायाममृता नाम बदर्यामुर्वशी तथा ।
ओषधी चोत्तरकुरौ कुशद्वीपे कुशोदका ॥
मन्मथा हेमकूटे तु कुमुदे सत्यवादिनी ।
अश्वत्थे वन्दिनीका तु निधिर्वैश्रवणालये ॥
गायत्री वेदवदने पार्वती शिवसन्निधौ ।
देवलोके तथेन्द्राणी ब्रह्मास्ये तु सरस्वती ॥
सूर्यबिम्बे प्रभा नाम मातृणां वैष्णवी मता ।
अरुन्धती सतीनां तु रामासु च तिलोत्तमा ॥

चित्रे ब्रह्मकला नाम शक्तिः सर्वशरीरिणाम् ।
शूलेश्वरी भृगुक्षेत्रे भृगौ सौभाग्यसुन्दरी ॥

× × × × ×

एतदुद्देशतः प्रोक्तं नामाष्टशतमुत्तमम् ।
अष्टोत्तरं च तीर्थानां शतमेतदुदाहृतम् ॥
इदमेव परं विप्र सर्वेषां तु भविष्यति ।
पठत्यष्टोत्तरशतं नाम्नां यः शिवसन्निधौ ॥
स मुच्यते नरः पापैः प्राप्नोति स्त्रियमीप्सिताम् ।
स्नात्वा नारी तृतीयायां मां समभ्यर्च्य भक्तितः ॥
न सा स्याद्दुःखिनी जातु मत्प्रभावान्नरोत्तम ।
नित्यं मद्दर्शने नारी नियता या भविष्यति ॥
पतिपुत्रकृतं दुःखं न सा प्राप्स्यति कर्हिचित् ।

( स्क० महापु० रेवा० १९८।६२-९६ )

[ क्रमशः ]

# पौराणिक तथा वैदिक अध्ययन एवं अनुसन्धान-संस्थान, नैमिषारण्य के कतिपय महत्त्वपूर्ण प्रकाशन

१. **मुक्तिवादः**—इस ग्रन्थ में वेदों, उपनिषदों तथा भारतीय दर्शनों में प्रतिपादित 'मुक्ति' के स्वरूप एवं उसकी प्राप्ति के उपायों पर शास्त्रीय दृष्टि से गम्भीर विचार किया गया है। इसके रचयिता डॉ० गौरीनाथ शास्त्री जी हैं— १०-००

२. **ब्रह्मपुराण-कथा-कोश**—इस ग्रन्थ में ब्रह्मपुराण में वर्णित कथाओं को हिन्दी-भाषा में अनूदित किया गया है। अनुवाद अत्यन्त रोचक शैली [illegible]होने के कारण इसकी लोकप्रियता बढ़ गयी है— १५-००

३. **मत्स्य एवं विष्णुपुराण-कथा-कोश** – इस पुस्तक में 'मत्स्य' एवं 'विष्णु' पुराणों में वर्णित कथाओं को रोचक शैली में हिन्दीभाषा के माध्यम से प्रस्तुत किया गया है। अतः यह पुस्तक अत्यन्त लोकप्रिय हुई है— १६-००

४. **श्रीदुर्गासप्तशती**—श्रीदुर्गासप्तशती पर बहुत व्याख्याएँ एवं अनुवाद प्रकाशित हुए हैं; किन्तु यह संस्करण अन्य संस्करणों से सर्वथा भिन्न है; क्योंकि श्रीदुर्गासप्तशती के गूढ़ एवं रहस्यात्मक पक्षों को हिन्दीभाषा के माध्यम से जिस गवेषणात्मक पद्धति से खोला गया है, वह अन्यत्र दुर्लभ है। अनेक अनुसन्धानपूर्ण परिशिष्टों तथा हिन्दी-अनुवाद के साथ प्रकाशित होने से इस ग्रन्थ की उपयोगिता अत्यधिक बढ़ गयी है—

साधारण संस्करण —२५-००
विशिष्ट संस्करण— [illegible]०-००

५. **नैमिषीयम्**—'नैमिषीयम्' पौराणिक तथा वैदिक अध्ययन एवं अनुसन्धान संस्थान की अर्धवार्षिक अनुसन्धान पत्रिका है। इसका प्रकाशन 'वसन्तपञ्चमी' एवं 'श्रावणीपूर्णिमा' को वर्ष में दो बार होता है। इस अनुसन्धान-पत्रिका में पौराणिक तथा वैदिक साहित्य से सम्बद्ध आनुसन्धानिक निबन्ध संस्कृत, हिन्दी एवं अंग्रेजी भाषाओं में प्रकाशित होते हैं। इसका वार्षिक चन्दा २० रूपया है। ( प्रति अङ्क १०-०० रूपये )।

६. **मार्कण्डेयमहापुराणम्**—इस पुराण का प्रकाशन हिन्दी-व्याख्या एवं विशिष्ट पर्यालोचनात्मक टिप्पणियों के साथ हो रहा है। 'मार्कण्डेय-पुराण' के प्रत्येक अध्याय के अन्त में पर्यालोचनात्मक टिप्पणियाँ लिखी गयी हैं, जिनमें उन-उन अध्यायों के गूढ़तम रहस्यों पर प्रकाश डाला गया है। इसका प्रकाशन तीन भागों में सम्पन्न हुआ है—

प्रथम भाग— साधारण संस्करण—६५-००; विशिष्ट संस्करण—१२५-००
द्वितीय भाग— साधारण संस्करण—६५-००; विशिष्ट संस्करण—१२५-००
तृतीय भाग— साधारण संस्करण—७५-००; विशिष्ट संस्करण—१५०-००

पत्र-व्यवहार-संकेत—निदेशक, पौराणिक तथा वैदिक अध्ययन एवं अनुसन्धान-संस्थान, नैमिषारण्य, सीतापुर (उ० प्र०)